TRIVANDRUM SANSKRIT SERIES

No. LXIV.

# THE MEGHASANDESA

OF

# KÂLIDÂSA

## With the commentary Pradîpa of DAKSHINÂVARTANÂTHA

EDITED BY

MAHÂMAHOPÂDHYÂYA

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS

1919.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६४.

# मेघसन्देशः

श्रीकालिदासप्रणीतः

श्रीदक्षिणावर्तनाथप्रणीतप्रदीपाख्यव्याख्यासमेतः ।

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

महामहोपाध्यायेन

त. गणपतिशास्त्रिणा

संशोधितः ।

---

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः ।

कोलम्बाब्दाः १०९४, क्रैस्ताब्दाः १९१९.

# PREFACE.

The Meghasandesa along with the commentary Pradîpa is now placed before the public for the first time. It is a beautiful and dignified commentary written by Dakshinâvartanâtha. Aruṇâchalanâtha, the illustrious commentator of Kumârasambhava and Raghuvamsa has followed the path shown in this commentary by Dakshiṇâvartanâtha. Many beautiful readings of the text are preserved in this commentary which are far better than those adopted by Mallinâtha.

Dakshiṇâvartanâtha quotes as authority Kesavasvâmin, the author of Nânârthârṇavasamkshepa written in the 12th century A. D. and is also quoted by Aruṇâchalanâtha. Hence it is clear that the commentator should have flourished between the dates of Kesavasvâmin and Aruṇâchalanâtha, who is earlier than Mallinâtha.

From the name Dakshinâvartanâtha, it seems probable that he is a native of the country of Cholas, as the presiding deity of Tiruvalanchuzhi, a village in the Chola country is known as Dakshinâvartanâtha and as it is likely that the name of the same deity is borne by the commentator. The word Dakshinâvarta appears to be a sanskritised form of Valanchuzhi, the word "Tiru" being prefixed to show the sacredness of the place.

The commentaries on Raghuvamsa and Kumârasambhava by Dakshinâvartanâtha have also been obtained by us which will be taken up for publication in due course in this series.

Two manuscripts were consulted for preparing this edition, one of them being obtained on loan from Mr. Govinda Pisharodi of Kailasapuram and the other from Mr. Krishna Varyar of Thiruparpu. I am grateful to these gentlemen for having placed their manuscripts at my disposal.

Trivandrum,
14th June 1919.

T. GANAPATI SÂSTRÎ.

# निवेदना ।

---

मेघसन्देशस्य प्रदीपाख्यव्याख्यासचिवस्येदं प्रकाशनम् इदम्प्रथमं नाम । प्रदीपस्य प्रस्थानं तावत् प्रौढं च सहृदयमनोरमं च यज्जातीयमेव तत्रभवान् व्याख्यानविद्याप्रवीणचूडामणिः अरुणगिरिनाथः कुमारसम्भवादिव्याख्यायामाश्रितवान् । अत्र बहुषु स्थलेषु मूलपाठा मल्लिनाथादृतमूलपाठेभ्यश्चारुतरा उपलभ्यन्ते ।

अस्य प्रणेता दक्षिणावर्तनाथो नानार्थार्णवसंक्षेपकर्तारं क्रैस्ताब्दीयद्वादशशतकस्थितं केशवस्वामिनं स्मरति, अरुणगिरिनाथेन स्मर्यते च । अतस्तयोरन्तरालकालप्रभवोऽयमिति स्फुटमेव । दक्षिणावर्तनाथ इति नाम्नायं चोलाभिजनः सम्भाव्यते, यतः चोलमण्डलान्तर्वर्तिनः 'तिरुवलञ्चुषि' (திருவலஞ்சுழி) इति द्रमिलभाषाप्रसिद्धस्य ग्रामस्याधिष्ठातृदेवो दक्षिणावर्तनाथ इति श्रूयते; तस्यैव देवस्य नामधेयमस्मिन् निवेशितमिति च सम्भाव्यते । दक्षिणावर्त इत्येतच्च 'वलञ्चुषि' (வலஞ்சுழி) इत्यस्यैव संस्कृतीकरणं भाति । तिरुवलञ्चुषि शब्दे तिरुशब्दस्तु श्रीपर्यायवाची पूजायां प्रयुक्तो द्रष्टव्यः । अनेन विनिर्मितं कुमारसम्भवव्याख्यानं रघुवंशव्याख्यानं चास्माभिरुपलब्धमस्ति, यदनतिचिरादस्यां ग्रन्थावलौ ग्रथयिष्यामः ।

अस्य चिरन्तनस्य मेघसन्देशव्याख्यानरत्नस्यादर्शदानेन कृतपरमोपकारं कैलासपुर-गोविन्दपिषारोटिमहोदयं तिरुपार्पु-कृष्णवार्यमहोदयं च प्रति वयं कृतज्ञाः स्मः ॥

अनन्तशयनम्, ३१-१०-१०९४.

**त. गणपतिशास्त्री.**

॥ श्रीः ॥

महाकविश्रीकालिदासप्रणीतः

# मेघसन्देशः

श्रीदक्षिणावर्तनाथप्रणीतप्रदीपाख्य-
व्याख्यासनाथः ।

---

## (पूर्वसन्देशः)

रघुवंशकुमारसंभवौ द्वौ स्फुटभावौ किल यस्य दीपिकाभ्याम् ।
स ददाति रसोज्ज्वलं प्रदीपं तिमिरं मेघसमुद्भवं विहन्तुम् ॥

इह खलु कविः सीतां प्रति हनूमता हारितं सन्देशं हृदयेन समुद्वहन् तत्स्थानीयनायकाद्युत्पादनेन सन्देशं करोति—

**कश्चित् कान्ताविरहगुरुणा स्वाधिकारात् प्रमत्तः**
**शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।**
**यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु**
**स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥**

कश्चिदिति । रामकथाभिलाषे लिङ्गम् 'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा' इति वक्ष्यमाणवचनम् । कश्चिद् यक्षः रामगिर्याश्रमेषु वसतिं चक्रे । कश्चिद् देवयोनिविशेषः रामनाम्नः पर्वतस्य आश्रमेषु देवभूमिषु वसतिं पदं चकार । कीदृशो यक्षः, स्वाधिकारात्

---

१. 'ये कुर्वाणः त' ख. पाठः. २. 'मम् । स्वा', ३. 'त् प्रमत्तः इति पाठः । जुगुप्साविरामप्रमादार्थानामित्यपादाने पञ्चमी । प्रमत्तोऽनवहितः ।' क. पाठः.

G. P. T. 3766. 500. 14-9-18. B

प्रमत्तः स्वस्याधिकारात् स्थानात् प्रमत्तः भ्रष्टोऽनवहितः। 'प्रमादोऽनवधानता' इत्यमरः। 'जुगुप्साविरामप्रमादार्थानाम्—'(वा० १.४.२४) इत्यपादाने पञ्चमी। स्वाधिकारप्रमत्त इति पाठे समासः कृच्छ्रलभ्यः। शापेन शापफलेन। निग्रहवचनं शापः। अस्तंगमितमहिमा, अस्तमिति मकारान्तमव्ययमिदम्। अस्तंगमितेत्येकं पदम्। वर्षभोग्येण कृत्स्नैकवर्षभोग्येण। 'अत्यन्तसंयोगे च' (२. १. २९) इति समासः। भर्तुः प्रोष्ठुः, स्वामिन इत्यर्थः। यक्षो देवयोनिविशेषः। जनकतनयेत्यादिना रामकथा सूचिता। स्निग्धच्छायातरुषु स्निग्धा लावण्यशालिनः छायाप्रचुरास्तरवो येषु रामगिर्याश्रमेषु। अनेनापि रामकथा सूचिता। बहुवचनेन विरहखेदादेकत्रावस्थानं तस्य न भवतीति सूचितम्॥ १॥

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श॥ २॥

तस्मिन्निति। अद्रिग्रहणं पूर्वश्लोके रामगिर्याश्रमे(ष्वित्युक्त)त्वात् कृतम्। कतिचित्, अनिर्दिष्टसंख्याविशेषेऽप्यस्मिन् पदे संख्याविशेषो द्रष्टव्यः। तद्यथा 'मासानन्यान् गमय चतुरो लोचने मीलयित्वा' इति वक्ष्यमाणवचनेन चतुर्णां मासानां गमयित(व्यं ? व्यत्वं) प्रतीयते। ते चाषाढात् प्रभृति चत्वारो मासाः, 'आषाढस्य प्रथमदिवस' इति वक्ष्यमाणत्वात्। पारिशेष्यादेकस्मिन् वत्सरे मासाष्टकं गमितमिति प्रतीयते। अबलाविप्रयुक्तः। पूर्वश्लोके कान्ताविप्रयोगे कथिते सत्य(पि) पुनर्वचनं वक्ष्यमाणकनकवलयभ्रंशादेः कान्ताविरह एव निमित्तमिति सूचयितुम्। कामीति पदमाश्रमवासित्वेऽपि तस्य तपःपरत्वं नास्तीति सूचयितुम्। कनकवलयभ्रंशरिक्तप्रकोष्ठः। विरहकार्श्यात् कामिनां कनकवलयभ्रंशो भवति। तथा शाकुन्तले—

---

१. 'र' । स्वा' क. पाठः.

"इदमशिशिरैरन्तस्तापाद् विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥"

इति । न त्वधिकारनिषेधादिति भावः । वप्रक्रीडापरिणतगजप्रेक्षणीयं वप्रक्रीडा तटाघातक्रीडा तदर्थं परिणतस्तिर्यग्दन्तप्रहारवान् गजः । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलधरः । अनेन विशेषणेन मत्तगजदर्शनात् कार्यसिद्धिर्भवतीति सूचितम् । अत्र महायात्रायां वराहमिहिरः—

"ज्वलितशिखिफलाक्षतेषुभक्षद्विरदमृदङ्कचामरायुधानि ।
मरतककुरुविन्दपद्मरागस्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥

स्वयमपि रचितान्ययत्नतो वा यदि कथितानि भवन्ति मङ्गलानि ।"

इति ॥ २ ॥

**तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-**
**रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।**
**मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः**
**कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥**

तस्य स्थित्वा कथमपि पुर इति । स्ववृत्तिं प्रियां प्रति मेघेन हारयितुकामस्तदर्थं मेघस्य स्वागतादिकरणाय कामार्तोऽपि महता यत्नेन तस्य पुरः स्थित्वेत्यभिप्रायः । कौतुकाधानहेतोरिति पाठः । कौतुकं कामविषयौत्सुक्यम् । कौतुकार्पणहेतोरित्यर्थः ।

"कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले ।
कामे ख्याते मङ्गले च"

इति यादवः । केतकाधानहेतोरिति पाठे केतकानां गर्भाधानहेतोरित्यर्थः किल भवेत् । इदमत्यन्तश्लाघ्यविशेषणं न स्यादिति बोद्ध-

व्यम् । कौतुकाधानहेतोरिति विशेषणं मनोरथस्थितं मेघस्वागतादिकार्यं विस्मृत्य स परवशो बभूवेत्यर्थस्य कारणत्वेनोक्तम् । अन्तर्बाष्पः प्रभु-त्वादन्तःस्तम्भितबाष्पः । प्रभुत्वं राजराजस्यानुचर इति सूचितम् । चिरं दध्यौ इति संबन्धः । दध्यौ चिन्तयामास । मोहाद् विषयशून्य-चित्ततया ध्यायतेः कर्माप्रयोगः । सुखिनः सुखहेतुमतः, सन्निहितप्रि-यजनस्येत्यर्थः । अन्यथावृत्ति उत्कण्ठापरवशम् । कण्ठाश्लेषप्रणयिनि जन इति । वर्षासमये मेघगर्जितश्रवणभयाद् भर्तृकण्ठमालिङ्गितुं प्रार्थ-यमाने प्रियजन इत्यर्थः । तस्याश्लेषप्रणयिनि जन इति पाठः । तस्य यक्षस्य । दूरसंस्थे दूरस्थिते ॥ ३ ॥

**प्रत्यासन्ने मनसि दयिताजीविताल‍म्बनार्थी**
**जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ।**
**स प्रत्यग्रैः कुटचकुसुमैः कल्पितार्घाय तस्मै**
**प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥**

प्रत्यासन्न इति । प्रत्यासन्ने प्रकृतिस्थे मनसि चेतसि । ध्यान-व्याकुलिते हृदये पुनः प्रतिष्ठिते सतीत्यर्थः । प्रत्यासन्ने नभसि इति पाठे नभःशब्दः श्रावणमासवचनः । 'नभः खं श्रावणो नभा' इत्यमर-सिंहवचनात् । तदा प्रस्तुतमाषाढं विहाय विलम्बनमयुक्तमिति मन्त-व्यम् । किञ्च श्रावणमासे 'मासानन्यान् गमय चतुरो लोचने मी-लयित्वा' इति वचनं स्यादयुक्तमिति । अन्ये त्वाहुः — नभःशब्दो वर्षर्तुवाचकः, वर्षासमये समागते दयिताजीविताल‍म्बनार्थी स्वप्रवृत्तिं जीमूतेन हारयिष्यन्निति वर्षासमयात् प्रागेव तस्य चिन्तेति । तदप्य-सङ्गतम् । 'इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे' इति तात्कालि-ककार्यचिन्तानिर्देशात् । दयिताजीविताल‍म्बनार्थी दयिताजीवितप्रयो-जनाम् । जीमूतेन । प्रकृतस्य तच्छब्दं विना नाम्नोपादानं वाक्यान्तर-व्यवधानादित्यनुसन्धेयम् । प्रवृत्तिं वृत्तान्तम् । कुटचकुसुमैः । 'कुटचो गिरिमल्लिका' इति हलायुधः । कुटचकुसुमग्रहणं वार्षिकत्वात् कृतमित्य-नुसन्धेयम् । कल्पितार्घाय इति पाठः । कल्पितपूजाविधये । 'मूल्ये

१. 'रत्वेन सु' ख. पाठः.

पूजाविधावर्घः' इत्यमरः । प्रीतिप्रमुखवचनं पूज्यानां प्रीतिवचने प्रधानवचनं स्वागतं शोभनमागतमागमनम् । अनेन स्वागतशब्दो विवक्षितः ॥ ४ ॥

सन्देशहरणाख्यस्य वस्तुनश्चैतन्यशून्येन मेघेन दुष्करत्वमाशङ्क्य परिहरति —

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थः क्व पटुकरणैः प्राणिभिः प्रापणीयः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रणयकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

धूमेति । सन्निपातः समुदायः । सन्देशार्थः, सन्देश एवार्थः सन्देशार्थ इति कर्मधारयः । सन्देशाश्चेति केचित् पठन्ति । पटुकरणैः पट्विन्द्रियैः । 'खमक्षमिन्द्रियं स्रोतो हृषीकं करणं मतम्' इति हलायुधः । औत्सुक्याद् इष्टार्थोद्युक्तत्वात् । 'इष्टार्थोद्युक्त उत्सुक' इत्यमरः । इत्यपरिगणयन्निति संबन्धः । गुह्यकः, निधिं गूहत इति गुह्यकः । यक्षाणां वैश्रवणनिधिगूहनात् क्रियानामधेयमिदम् । अथवा यक्षगुह्यकशब्दौ धनदेऽपि वर्तेते । 'अथो यक्षगुह्यकौ । धनदेऽपी'ति यादवः । तस्माद् वैश्रवणवाचकेन गुह्यकशब्देन तद्भृत्यानां यक्षाणां व्यपदेशस्य युक्तत्वादुक्तं गुह्यक इति । तस्माद् यक्षगुह्यकयोर्भेदे सत्यपि (यश्चक्रयित्ययक्षश्चक्रया ? यक्षश्चक्रे इत्यपेक्ष्य) गुह्यकशब्दस्य विरोधो (न) भवतीत्यनुसन्धेयम् । ययाचे इति वक्ष्यमाणापेक्षया । प्रणयकृपणा याच्ञायां क्षुद्राः । क्षुद्रत्वं च दृष्टापरित्यागः । चेतनाचेतनेषु, इयं हि विषयसप्तमी । अचेतनेष्वपीति वक्तव्ये (चेतना) चेतनग्रहणं धूमज्योतिःसलिलमरुतामित्यादिना प्रस्तुतस्याचेतनस्य तदनन्तरं क्व पटुकरणैरित्युपक्षिप्तस्य चेतनस्य (चा)नुगुणेन कृतमित्यनुसन्धेयम् ॥५॥

इदानीं स्तुतिपूर्वां याच्ञां करोति —

जातं वंशे भुवनविदिते पुष्कलावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।

**तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं**
**याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥**

जातमिति । पुष्कलावर्तकानां मेघानाम् । कूटस्थाः केचन मेघाः पुष्कलावर्तकाः । प्रकृतिपुरुषम् अमात्यादिप्रकृतिवर्गस्थं पुरुषम् । कामरूपम् इच्छाधीनविग्रहम् । इदं विशेषणं दुर्गादिगमनार्थम् । वक्ष्यति — 'तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी'ति, 'गत्वा सद्यः कलभतनुतामि'ति च । तेनाभिजात्यप्रभुत्वपरिज्ञानेन । अर्थित्वम् अभ्यर्थनाम् । विधिवशाद् दूरबन्धुः इत्यन्वयः । दूरबन्धुर्दूरस्थभार्यः । बध्नातीति बन्धुरिति व्युत्पत्त्या बन्धुशब्दो भावबन्धिन्यां भार्यायां वर्तते । बन्धुशब्दपर्यायेण सुहृत्पदेन भार्यापि गृह्यते —

"पुत्रः प्रियाणामधिको भार्यापि सुहृदां वरा ।
गिरीणामधिको मेरुर्देवानां मधुसूदनः ॥"

इति । मोघा व्यर्था निरर्थका । वरमीषत्प्रियम् । वरिष्ठाश्रयणे तु वरेति वक्तव्यम् । अत्रामरसिंहः — 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये' इति । अधिगुणे सगुण इत्यर्थः । अधमे निर्गुणे । लब्धकामा लब्धप्रार्थनीया । अधिगुणे मोघापि याच्ञा वरमीषत्प्रियमित्यर्थः । अलाभादप्रिया च भवतीत्यभिप्रायेण मनाक्प्रियमित्युक्तम् । अधमे याच्ञा लब्धकामापि न वरमित्यन्वयः ॥ ६ ॥

का वा भवतो याच्ञा इत्यपेक्षायामाह —

**सन्तप्तानां त्वमसि शरणं तत् पयोद ! प्रियायाः**
**सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।**
**गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां**
**बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥**

सन्तप्तानामिति । आतपसन्तप्तानां कामसन्तप्तानां च । ननु कामसन्तप्तानां मेघालोकनं विरोधि । उक्तं च 'कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे' इति । तत् कथं कामसन्तप्तानामित्यर्थो गृह्यते । उच्यते । मेघः खलु प्रोषितप्रियतमप्रेरणया तान् प्रोषितान् प्रियत-

माभिः सङ्गमय्य तेषां मिथुनानां सन्तापं हरति । तस्मात् सन्तप्तानां त्वमसि शरणमित्युक्तम् । वक्ष्यति 'यो वृन्दानि त्वरयति' इति । मे सन्देशं प्रियाया हर इत्यन्वयः । कुत्र स्थिता सा प्रिया, तत्स्थानस्य नाम किं लक्षणं चेत्यपेक्षायामाह — गन्तव्येति । अलका नाम, नाम-शब्दः प्रसिद्धौ । यक्षेश्वराणां यक्षमुख्यानाम् । बाह्योद्यानस्थितहर-शिरश्चन्द्रिकाधौतहर्म्या इत्यनेन लक्षणमुक्तम् । अत्र केचित् कैलासा-लयवर्तिनः परमेश्वरस्यालकोद्याने चैत्ररथेऽवस्थानमयुक्तमिति मन्य-माना एवं व्याचक्षते — कैलासोत्सङ्गवर्तिन्या अलकाया बहिर्निस्सर-णप्रदेश उद्यानशब्देन विवक्षितः । 'स्यादुद्यानं निस्सरणे वनभेदे प्रयोजने' इत्यमरसिंहवचनाद् इति ॥ ७ ॥

यदि भवान् मत्कार्ये सन्नह्यति, तन्न केवलं ममैवाश्वासकम्, अन्यस्यापि जनस्येत्यभिप्रायेणाह --

**त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः**
**प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः ।**
**कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां**
**न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥८॥**

त्वामारूढमिति । पवनपदवीम् आकाशम् । उद्गृहीतालका-न्ताः प्रियविरहात् कपोललम्बित्वादलकानामुद्ग्रहणमुक्तम् । प्रत्ययात् प्रियागमनविश्वासात् । आश्वसत्य इति नुमागमरहितः पाठः । अत्र के-चित् 'क्षमूष् सहने' इत्यस्माद् धातोः षिद्भिदादिपाठेन षित्कार्ये सिद्धे क्षमूष् इति षित्त्वं गणकार्यस्यानित्यत्वज्ञापकं भवति, अत एव 'न वि-श्वसेत् पूर्वविरोधितस्य' इत्यत्र शपो लुङ् न भवति, तथा भट्टिकाव्ये-ऽपि 'आश्वसेयुर्निशाचराः' इति । तस्मादाश्वसन्त्य इति नुमागमसहितः पाठ इति व्याचक्षते । तन्न । अन्यथापि रूपसिद्धेः । यत्र गणकार्य-स्यानित्यत्वमपेक्ष्यैव रूपसिद्धिर्भवति तत्रैव तदाश्रयणस्य युक्तत्वादि-त्यलं विस्तरेण । सन्नद्धे प्रोषितनिवर्तनोद्युक्ते । विरहविधुरां विरहक्लिष्टां विरहकृच्छ्रगतामित्यर्थः ।

"विधुरः पत्न्यपेते स्यात् क्लिष्टविश्लिष्टयोरपि"

इति यादवः। अन्योऽपि, ममासदृशोऽपि पृथग्जनोऽपीत्यर्थः। 'अन्यौ तु भिन्नासदृशौ' इति यादवः। अयमिव जनः (जनमिति?) इति अहमिवेत्यर्थः। अहं पराधीनवृत्तिर्यथा भवामि, तथा पृथग्जनोऽपि पराधीनवृत्तिर्न स्यात्, स कस्त्वयि सन्नद्धे जायामुपेक्षेतेत्यर्थः॥

अनया निमित्तगत्या मत्प्रियादर्शनात् प्रागेव भवतः प्रियजनसङ्गमो भविष्यतीत्यभिप्रायेणाह—

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः।
गर्भाधानक्षमपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगाः खे भवन्तं वलाकाः॥ ९॥

मन्दं मन्दं नुदतीति। मन्दपवनानुकूल्यमत्र निमित्तम्। तथा महायात्रायां वराहमिहिरः—

"प्रोत्क्षिप्तानलपांसुपत्रविहगच्छत्रध्वजापन्नकृद्
दुर्गन्धः क(र? रि)दानशोषजननः संपृक्तलोष्टोद्गमः।
यातुर्वायुरभीष्टदः शुभकरो यात्रानुगोऽल्पोद्यमः
प्रह्लादी सुरभिः प्रदक्षिणगतिः सारश्च सिद्धिप्रदः"

इति। उक्तं च—

"पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः॥"

इति। पवनश्चेत्यत्र चकारेण निमित्तान्तरं चातकानुकूल्यं समुच्चीयते। यथाशब्दः सादृश्ये। सादृश्यं निमित्तफलयोरानुरूप्यम्।

'यथा सादृश्ययोग्यत्ववीप्सास्वर्थानतिक्रमे'

इति यादवः। अथवा यथाशब्दो यस्मादर्थे। प्रमाणं तु मृग्यम्। यथा त्वामनुकूलः पवनो मन्दं मन्दं नुदति, तथा वलाकासङ्गमो भविष्यतीत्यर्थः। वामो वामपार्श्वस्थः। चकारस्त्वर्थः पूर्वोक्तरीत्या बोद्धव्यः। नदति स्वनं करोति। मधुरं श्रुतिसुखम्। सगन्धः 'सगन्धो बन्धुरिष्यते' इति हलायुधः। 'पितृपैतामहानन्वात्यान् कुर्वीत

दृष्टापदानत्वात् ते ह्येनमपचरन्तमपि न त्यजन्ति सगन्धत्वाद्" (अधि० १. अध्या० ८. प्र० ४) इति कौटिल्येन बन्धुविषये सगन्धशब्दः प्रयुक्तः। अत्रापि यथाशब्दोऽनुषञ्जनीयः। वामपार्श्वस्थस्य चातकस्य निनदो यात्रायां निमित्तमित्यत्र योगयात्रायां वराहमिहिरः—

"छुचुन्दरी सूकरिका शिवा च श्यामागलीपिङ्गलिकान्यपुष्टाः।
वामाः प्रशस्ता गृहगोलिकाश्च पुंसंज्ञिता ये च पतत्रिणश्च ॥"

इति। अनेन चातकस्यापि पुंशब्देनोपादानं कृतमित्यनुसन्धेयम्। तथा महायात्रायां स एव वराहमिहिरः कालविशेषमाश्रित्य चातकस्वरं निषेधति—

"न तु भाद्रपदे ग्राह्याः सूकराः श्ववृकादयः।
शरद्यब्जादगोक्रौञ्चाः श्रावणे हस्तिचातकौ ॥"

इति। कालविशेषनिषेधादनिषिद्धे काले चातकस्वरस्य निमित्तत्वं प्रतीयते। गर्भाधानक्षमपरिचयात्, गर्भशब्दः कुक्षिस्थायिजन्तुवाचकः।

"गर्भोऽपवरकेऽन्नेऽग्नौ सुते पनसकण्टके।
कुक्षौ कुक्षिस्थजन्तौ च"

इति यादवः। क्षमशब्दः शक्तवाचकः।

"क्षितिक्षान्त्योः क्षमायुक्ते क्षमं शक्ते हिते त्रिषु"

इत्यमरः। गर्भाधानशक्तः परिचयो गर्भाधानक्षमपरिचयः, तस्माद्धेतोः। मेघसंगत्या वलाका गर्भं धारयन्तीति प्रसिद्धम्।

"मेघाभिकामा परिसंपतन्ती संमोदिता भाति वलाकपङ्क्तिः"

इति लिङ्गदर्शनं चास्ति। नूनमिति निश्चये। 'नूनं तर्केऽर्थनिश्चय' इत्यमरः। आबद्धमालाः आबद्धपङ्क्तयः आबद्धपुष्पस्रज इति च ध्वन्यते। नयनसुभगाः, इदं विशेषणं च वलाकासु मेघप्रियासमाधिलिङ्गम्। खे व्योम्नि। अनेन विविक्तस्थानं च ध्वन्यते ॥ ९ ॥

अनयैव निमित्तगत्या त्वमविघ्नगतिर्मम जायां चाव्यापन्नामेवावश्यं द्रक्ष्यसीत्यभिप्रायेणाह —

**तां चावश्यं दिवसगणनातत्परामेकपत्नी-**
**मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।**
**आशाबन्धः कुसुमसदृशप्राणमप्यङ्गनानां**
**सद्यःपातप्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥**

तां चावश्यमिति । दिवसगणनातत्पराम्, अनेन मद्विरहे सा न विपन्ना स्याद् विरहावधेर्नियतत्वादित्युक्तम् । सा कामं जीवतु, तस्याः शीलं यदि खण्डितं स्यात् तव प्रार्थना व्यर्था भविष्यतीत्याशङ्क्याह —**एकपत्नीम्**। एका असपत्नीका पत्नी यज्ञसंयोगार्हा वेत्येकपत्नीति कर्मधारयः । असपत्नीकत्वात् पत्नीत्वाच्च तस्याः शीलखण्डनं न भवतीत्यभिप्रायः । तस्मादव्यापन्नाम् । अविहतगतिः त्वमविघ्नितगतिः । भ्रातृजायाम् अनेन परस्त्रीदर्शननिषेधस्तवात्र न स्यात् त्वद्भ्रातृजायात्वादित्युक्तम् । प्रकृत्या सुकुमारहृदयाः खलु स्त्रियः । ततः कथमेतावन्तं कालं दिवसगणनां कृत्वा जीवतीत्याशङ्क्याह — आशेत्यादि । आशाबन्धः प्रियतमश्चेत् जीवति कालान्तरे तत्समागमो भविष्यतीत्यभिलाषः । आशाबन्धशब्देन निगलसमाधिर्विवक्षितः । रुणद्धीति, निगलकार्यस्य वक्ष्यमाणत्वात् । कुसुमसदृशप्राणं कुसुमसदृशबलम् ।

"प्राणो वायौ बले स्थैर्ये पुंसि भूम्न्यसुवाचकः"

इति केशवस्वामी। कुसुमसदृशं प्रायशो ह्यङ्गनानामिति केचित् पठन्ति । सद्यःपातप्रणयीति पाठः । विरहसमये सद्यःपातप्रार्थनाशीलम् ॥

मार्गे तव सहायाः संभविष्यन्तीत्याह—

**कर्तुं यच्च प्रभवति महीमुत्सिलिन्ध्रामवन्ध्यां**
**तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।**
**आ कैलासाद् बिसकिसलयच्छेदपाथेयवन्तः**
**संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥**

कर्तुमिति । चकारः सहाया इत्यनेन संबध्यते । उत्सिलिन्ध्राम् उद्गतकन्दलिकाम् । अत एवावन्ध्याम् । अनेन पदेन गर्जितस्य वार्षिकत्वमुक्तमित्यनुसन्धेयम् । श्रवणसुभगं राजहंसानां श्रवणसुभगमित्यर्थः । परुषं मेघगर्जितमिति प्रसिद्धम् । वक्ष्यति च — 'यस्यास्तोये कृतवसतय' इत्यादिकम् । तस्मात् कथं हंसानां श्रवणसुभगमित्युक्तम् । सत्यम् । इदं परिगृहीततटाकादिपरित्यागात् किञ्चित्परुषं, स्वेषां निवासस्थानभूतस्य मानसतटाकस्य गमनहेतुत्वादतीव प्रियं च । उक्तं च— 'क्वचित् खगानां प्रियमानसानाम्' इति । ननु च हंसाः प्रियमानसाश्चेत् कुतो हेतोस्तद् विहाय देशान्तरे परिभ्रमन्ति । उच्यते । हिमालयैकदेशस्थं मानसं हिमदूषितसलिलादिकत्वादनुपभोग्यं भवति । ततस्तेषां देशान्तरगमनं भवति । वर्षसमये तु वर्षजलविरलितहिमत्वात् तस्य हंसनिवासयोग्यत्वमस्ति । नित्यप्रसन्नत्वाद् देशान्तरतटाकादिवत् कालुष्यं न भवतीत्युदीच्या उपदिशन्तीत्यनुसन्धेयम् । मानसोत्काः मानसोत्सुकाः, इदं च प्रियमानसत्वलिङ्गम् । अनेन पदेन लोके प्रवत्स्यतः पुरुषस्य सहायाज्ञानसमाधिर्विवक्षित इत्यनुसन्धेयम् । बिसकिसलयच्छेदपाथेयवन्तः । पाथेयं पथि साधु भोज्यं वस्तु । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (४. ४. १०४) इति ढञ्प्रत्ययः । बिसकिसलयच्छेदपाथेया इत्युक्तेऽपि विवक्षितसिद्धिर्यद्यपि भवति, तथापि स्पष्टार्थं मतुप्प्रत्ययः कृत इत्यनुसन्धेयम् । नभसि, अनेन सहायवद्भिरेव गन्तव्यः शून्यः पन्थाः सूचितः । राजहंसा लोहितचञ्चुचरणा हंसाः ।

"राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः"

इत्यमरः ॥ ११ ॥

**आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं**
**वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।**
**काले काले भवति भवता यस्य संयोगमेत्य**
**स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥**

आपृच्छस्वेति । आपृच्छस्व सभाजयस्व संमानयेत्यर्थः । 'आङि नुप्रच्छ्योरुपसंख्यानम्' (वा० १. ३. २१) इत्यात्मनेप-

दम् । 'आनन्दनसभाजने । आप्रच्छनमि'त्यमरः । अत्र गच्छामीति प्रश्नवचनेन पूजनं विवक्षितम् । न केवलं भवतः सख्यादेवास्य पर्वतस्य सभाजनं कार्यं, विशिष्टपुरुषपरिग्रहाच्चेत्याह —वन्द्यैः पुंसामिति । अङ्कितं कृतसञ्चारम् । मेखलासु सानुषु । अस्य मया सह सख्यमस्तीति कुतोऽवगम्यत इत्यपेक्षायामाह — काले काले इति । प्रतिवर्षासमयं सुहृत्सङ्गमकालश्च विवक्षितः । स्नेहव्यक्तिः प्रेमाविष्करणम् । बाष्पमूष्माणमश्रुजलं च । 'बाष्पोऽश्रुण्यम्बुधूमे च' इति यादवः । उष्णं, चिरविरहजत्वादुष्णमित्यर्थः । भवता संयोगमेत्य चिरविरहजमुष्णं बाष्पं मुञ्चतो यस्य स्नेहव्यक्तिर्भवतीत्यन्वयः । अत्र कश्चित् सुहृद् दूरादागतं सुहृदं दृष्ट्वा चिरविरहोष्णं बाष्पमुन्मुच्य सौहृदमाविष्करोतीत्यर्थः खण्डश्लेषालङ्कारेण प्रतीयत इत्यनुसन्धेयम् ॥ १२ ॥

**मार्गं मत्तः शृणु कथयतस्त्वत्प्रयाणानुरूपं**
**सन्देशं मे तदनु जलद! श्रोष्यसि श्राव्यबन्धम् ।**
**खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र**
**क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥**

मार्गमिति । मार्गं मत्तः शृणु कथयत इति पाठः । मत्त इति पञ्चमी । मार्गं तावत् कथयत इति पाठे कथयत इत्यस्य विशेष्यपदं नास्तीत्यनुसन्धेयम् । सन्देशं 'श्यामास्वङ्गमि'त्यादिना वक्ष्यमाणम् । श्राव्यबन्धम् । अवश्यं श्रोतव्यरचनम् । शृणोतेः 'ओरावश्यके'(३. १. १२५) इति ण्यत्प्रत्ययः । खिन्नः खिन्नः यदा यदा खिन्नः तदा तदा शिखरिषु पदं न्यस्य गमिष्यसीत्यर्थः । खेदश्च शारीरः । यत्र यस्मिन् मार्गे । क्षीणः क्षीण इत्यसमस्तम् । क्षयश्चाभ्यन्तरो विवक्षितः । परिलघु गौरवरहितम् । स्रोतसां, पर्वतोद्भूतानामिति शेषः । परिलघुग्रहणं स्रोतोग्रहणं च पानीयस्य पथ्यत्वाय । अत्र वाहटे—

"उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ।
हिमवन्मलयोद्भूताः पथ्याः"

इति ॥ १३ ॥

**अद्रेः किंस्विद् वहति पवनः शृङ्गमित्युन्मुखीभि-**
**र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।**
**स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खं**
**दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥**

अद्रेरिति । किंस्विदिति वितर्के । अत्रेदमनुसन्धेयं—श्रीपर्वतरामगिर्यादयः सिद्धानां निवासस्थानमिति प्रसिद्धम् । अत एव रामगिरिवर्तिनीनां सिद्धाङ्गनानामौन्मुख्यं संभवति । खेचरत्वात् तस्य । वक्ष्यति— 'सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गं' इति । स्थानाद्, अनेनास्थानं च विवक्षितम् । सरसनिचुलाद् आर्द्रवानीरवतः। सरसनिचुलादित्यत्र निचुलपदेन निचुलाभिधानः कश्चन कविर्विवक्षितः। यस्य सूक्तिः सुभाषिते श्रूयते—

"संसर्गजा दोषगुणा भवन्तीत्येतन्मृषा येन जलाश्रयोऽपि ।
स्थितत्वानुकूलं निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात् ॥"

इति । अनया निचुलोपवर्णनया तस्य कवेर्निचुलाभिधानत्वमासीदित्यनुसन्धेयम् । स तु निचुलकविरास्थानगतः कालिदासस्य सूक्तीः संभावयति । तस्मात् सर(स)पदेन तं कविं स्तौति। खमुत्पत । अनेन स्वकाव्यस्योच्छ्रितस्थानविजृम्भणं च विवक्षितम्। अयमभिप्रायः—किमन्यैरसूयुभिः, आस्थानगतो रासिकः स निचुल एव तवोच्छ्रायं करोतीति दुर्जनभीषणभीतं मेघसन्देशाभिधानं स्वप्रबन्धं मेघच्छद्मना समाश्वासयति । तव काव्यं के नाम दूषयन्तीत्यपेक्षां हृदि कृत्वाह—दिङ्नागानां दिग्गजानाम् । अनेन दिङ्नागाचार्यश्च विवक्षितः। पथि अनेन विजृम्भणावकाश उत्पतनमार्गश्च विवक्षितः। परिहरन् वर्जयन् स्थूलहस्तावलेपान् उत्पतन्तं मेघमालोक्य सजातीयभ्रमेण स्थूलहस्तावताडनानि संभावितानि। अनेन प्रबन्धदूषणसमये स्थूलहस्ताभिनयाश्च विवक्षिताः । अयमभिप्रायः—दिङ्नाग इति कोऽप्याचार्यः कालिदासप्रबन्धानन्यत्रोक्तोऽयमर्थ इति स्थूलहस्ताभिनयैर्दूषयति । तमाचार्यं स्वप्रबन्धस्यापूर्वार्थाभिधायित्वमाश्रित्य मेघोपदेशव्याजेन कविरुपालभत इति ॥ १४ ॥

**रत्नच्छायाव्यतिकर इव प्रेक्षणीयं पुरस्ताद्**
**वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य ।**
**येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते**
**बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥**

रत्नेति । रत्नच्छायाव्यतिकर इति पाठः । वल्मीकाग्रात् प्रभवति, तदन्तर्गतसर्पशिरोरत्नच्छायाव्यतिकर इव प्रेक्षणीयं धनुःखण्डं वल्मीकाग्रात् प्रभवतीत्यर्थः । वल्मीकाग्रादिन्द्रधनुषः प्रादुर्भाव उक्तः संहितायां --

"जलमध्येऽनावृष्टिर्भुवि सस्यवधस्तरुस्थिते व्याधिः ।
वल्मीके शस्त्रभयं निशि सचिववधाय धनुरैन्द्रम् ॥"

इति । अनेनार्थेनापि निमित्तं सूचितम् । तथाह महायात्रायाम्—

"चापमैन्द्रमनुलोम(य ? म )खण्डं प्रोज्ज्वलद्धहलमायतमिष्टम् "

इति ॥ १५ ॥

**त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः**
**प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।**
**सद्यःसीरोत्कषणसुरभि क्षेत्रमारुह्य मालं**
**किञ्चित् पश्चाद् व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥**

त्वय्यायत्तमिति । अत्रेदमनुसन्धेयं—रामगिरेरुत्तरतः केचिद् देवमातृका जनपदाः सन्ति । तत्रत्याः स्त्रियः पामर्यः । तस्मात् तासां स्त्रीणां भ्रूविलासानभिज्ञत्वमुक्तम् । सद्यःसीरोत्कषणसुरभि, इदमारोहणक्रियाविशेषणम् । वर्षानन्तरं हलोत्कर्षणसुरभिगन्धमित्यर्थः । मालं पर्वतप्रायमुन्नतस्थलम् । तथोत्पलमालायां —

"मेघमन्मथयोर्मारो मारं मरणमिष्यते ।
माला पुष्पादिबन्धे स्यान्मालमुन्नतभूतलम् ॥"

इति । मालयोगान्मालव इति प्रसिद्धो देशः । आरुह्येत्यनेनापि तस्योन्नतत्वं प्रतीयते । लघुगतिः, मालक्षेत्रे वृष्टिविसर्जनाल्लघुगतिरित्यर्थः । मालेन पश्चाद्गमनं तदुत्तरेण गमनं चाम्रकूटाख्ये पर्वते विश्रान्त्यर्थमुक्तमित्यवसेयम् ॥ १६ ॥

तामेव विश्रान्तिमाह —

त्वामासारप्रशमितदवोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः॥

त्वामासारेति। अनेन प्रथमोपकारः सूचितः। आसारो धारासंपातः। मूर्ध्ना शिखरेण शिरसापीति ध्वन्यते। वक्ष्यति, वहतेरिदं रूपम्। अध्वश्रमपरिगतं अध्वश्रमेण परिक्षीणगमनमिति व्याचक्षते। मद्वहने किं कारणमित्याशङ्क्याह — न क्षुद्रोऽपीति। संश्रयाय निवासाय। तथोच्च इति, हृदयस्थितवैभवानुसन्धानेन तथाशब्दः प्रयुक्तः। क्षुद्रोऽपि स्वस्मिन् संश्रयाय मित्रे प्राप्ते प्रथमसुकृतापेक्षया विमुखो (न) भवति। तथोच्चः किं पुनरित्यर्थः॥ १७॥

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः सर्पवेणीसवर्णे।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः॥

छन्नेति। छन्नोपान्तः छादितपर्यन्तः। परिणतफलद्योतिभिः परिणतफलपाण्डुवर्णोज्ज्वलैः। पाण्डुवर्णत्वं च हरिणसमानवर्णत्वं, न तु श्वैत्यम्। आम्रफलानामनेकवर्णत्वात्।

"अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम्"

इति श्रीरामायणवचनदर्शनात्। अनेन वर्षासु काननाम्राः फलन्तीति सूचितम्। सर्पवेणीसवर्णे। वेणी केशबन्धः। सर्पस्य वेणी सर्पस्य वेष्टनम्। वर्णतः संस्थानतश्च सर्पवेणीसमान इत्यर्थः

"नीलालके मेघचये मेचके स्तनचूचुके।
मण्डले कृष्णसर्पाणां सर्पवेणी निगद्यते॥"

शेषविस्तारपाण्डुः, मध्यादन्यत्र हरिणवर्णः । 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः ॥ १८ ॥

**स्थित्वा तस्मिन् वनचरवधूभुक्तकुञ्जे मुहूर्तं**
**तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।**
**रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां**
**भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥**

स्थित्वेति । कुञ्जं लतादिपिहितोदरं पर्वतगृहम् । अनेन वनचरवधूसंभोगं च द्रक्ष्यसीत्युक्तम् । मुहूर्तम्, अनेन वनचरवधूपरिभोगदर्शनात् तव कालविलम्बो मा भूदिति विवक्षितम् । तोयोत्सर्गद्रुततरगतिः 'आसारप्रशमितदवोपप्लवम्' इत्यत्रोक्तस्तोयोत्सर्गोऽत्र विवक्षितः । तत्परं शैलात् परम् । तीर्णोऽतिक्रान्तः । वनचरमिथुनपरिभोगानतिदर्शनात् तव विषादो मा भूत् । संभोगलोलुपं मिथुनान्तरं द्रक्ष्यसीत्यभिप्रायेणाह—रेवां द्रक्ष्यसीति । रेवां नर्मदाम् । विन्ध्यपादे विन्ध्यपर्यन्तपर्वते । विन्ध्यपादे विशीर्णामित्यनेन कामातिशयात् प्रियतमपादे कस्याश्चित् पतनं ध्वन्यते । भक्तिच्छेदैः छेदाकारभक्तिभिर्बहुविधाभिर्भक्तिरेखाभिः । विरचितामर्पिताम् । भूतिं भसितम् । उक्तञ्च—

"भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तहस्तिनः"

इति ॥ १९ ॥

**तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-**
**र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।**
**अन्तःसारं घन ! तुलयितुं नानिलः शक्ष्यति त्वां**
**रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥**

तस्या इति । तस्यास्तिक्तैः, तिक्तशब्देन सुरभिगन्धश्च तिक्तरसश्च विवक्षितः ।

"कटुतिक्तकषायास्तु सौरभ्ये परिकीर्तिताः"

इति हलधरः। वनगजमदैर्विन्ध्याटवीगजमदैर्वासितं, अनेन गन्धसंस्कारो रूषितत्वं च विवक्षितम्। वान्तवृष्टिः, अनेन वर्षोत्सर्गश्छर्दिश्च। जम्बूकुञ्जप्रतिहतरयम्, अनेन लघुत्वं च कषायभावना च। अन्तःसारम्, अनेनाभ्यन्तरस्थजलत्वमभ्यन्तरबलत्वं च विवक्षितम्। घनी, अनेन मेघश्च स्थिरशरीरश्च। अनिलः, अनेन बाह्यः शारीरवायुश्च। रिक्तः, अनेन कृशश्च कृतवमनशुद्धिश्च विवक्षितः। पूर्णता, अनेन तोयपानेन पेयादिक्रमेण चाप्यायनम्। अयमत्र समाधिः—कृतवमनशुद्धिः पुरुषः शेषदोषोपशोषणार्थं तिक्तकषायवासितं लघुजलं पिबति। पश्चाद् बलवतोऽस्य वायुरपि न कुप्यतीति। अत्र वाहटः—

"कषायांश्चाहिमास्तस्य विशुद्धौ श्लेष्मणो हिताः।
किमु तिक्ताः कषाया वा ये निसर्गात् कफापहाः॥"

इति। खरनादेऽपि—

"कृतशुद्धेः क्रमात् पीतपेयादेः पथ्यभोजिनः।
वातादिभिर्न बाधा स्यादिन्द्रियैरिव योगिनः" ॥ २० ॥

**नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-**
**राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्।**
**जग्ध्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः**
**सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम्॥२१॥**

नीपमिति। नीपः कदम्बः। स च द्विविधः जलकदम्बः स्थलकदम्बश्चेति। जलकदम्बस्तरुप्रायः। स्थलकदम्बः प्रादेशमात्रप्ररूढ ओषधिविशेषः। अत्र स्थलकदम्बो विवक्षितः। तस्य वर्षास्वेव प्रादुर्भावात्। अत एव कदम्बस्य प्रावृषेण्यसंज्ञा।

"कदम्बः पुलकी श्रीमान् प्रावृषेण्यो हलिप्रियः"

इति यादवः। नीपं हरितकपिशं, हरितः पलाशवर्णः कपिशः स्वर्णाभः। अर्धरूढैः एकदेशप्ररूढैः। अनेन तस्य नवप्रादुर्भावः सूचितः। आविर्भूतप्रथममुकुलाः, अनेनापि कन्दलीमुकुलप्रादुर्भावस्य नवत्वमुक्तम्। अनुकच्छमनुजलप्रायदेशम्।

"जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः"

इत्यमरः। जग्ध्वेति पाठः। जग्ध्वा भक्षयित्वा। 'अद भक्षणे" इत्यस्माद् धातोः क्त्वाप्रत्यये कृते 'अदोजग्धिर्ल्यप् ति किति' (२.४.३६) इति जग्ध्यादेशः। ननूर्वीगन्धस्य वक्ष्यमाणत्वाद् दग्धारण्येष्विति पाठ एव युक्त इति। तन्न। दाहमन्तरेणापि वसुधागन्धस्य संभवात्। उत्तरत्र वक्ष्यति च—'त्वं निःष्यन्दोच्छ्वसितवसुधागन्धसंपर्करम्य' इति। अरण्येषु, सर्वशेषमिदम्। अधिकसुरभिं, स्वभावत एव उर्व्या गन्धवत्त्वापेक्षया अधिकशब्दः प्रयुक्तः। सारङ्गाः हरिणाः।

"चातके हरिणे पुंसि सारङ्गः शबले त्रिषु"

इति सिंहः। जललवमुचः, अनेन नीपकन्दलीवसुधागन्धानामुत्पादकत्वमुक्तम्। निर्मनुष्येष्वरण्येषु हरिणास्तवाभिनववृष्टिपातोद्भूतं नीपं दृष्ट्वा तथानुकच्छं कन्दलीश्च जग्ध्वा उर्व्या अधिकसुरभिं गन्धमाघ्राय च त्वद्गमनमार्गं त्वदागमनोत्सुकेभ्यः पथिकेभ्यः सूचयिष्यन्तीत्यर्थः। ये पुनः सारङ्गशब्देन चातकहरिणगजा विवक्षिता इति व्याचक्षते, तेषां तु मतमुपेक्षणीयं, सारङ्गशब्दस्य गजवाचित्वादर्शनात्।

"सारङ्गः शबलो वर्णश्चातकः षट्पदो मृगः"

इति यादवः। किञ्च एकस्यैव शब्दस्य युगपदनेकार्थत्वस्य भिन्नक्रियासमन्वयस्य च क्लिष्टत्वात् कन्दलीश्चेत्यत्र समुच्चयानुपपत्तेश्चेत्यलमतिप्रसङ्गेन॥ २१॥

**उत्पश्यामि द्रुतमपि सखे! मत्प्रियार्थं यियासोः**
**कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते।**
**शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः**
**प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्॥**

उत्पश्यामीति। उत्पश्यामि उत्प्रेक्षे चिन्तयामीत्यर्थः। ककुभसुरभौ, अनेन प्रत्युद्गमने पुष्पसंपत्तिर्निसर्गसिद्धेत्युक्तम्। शुक्लापाङ्गैर्मयूरैः।

"मयूरो बर्हिणो बर्ही शुक्लापाङ्गः शिखावलः"

इति यादवः । सजलनयनैः मेघसन्दर्शनानन्देन साश्रुजलनयनैः । अनेन शु(क्ति ? क्र)पात्रगतं पाद्यजलं सूचितम् । स्वागतीकृत्य केका इत्यनेन कुशलप्रश्नो विवक्षितः । प्रत्युद्यातः प्रत्युद्गतः । आतिथ्यक्रियया प्रत्युद्गमनमत्र विवक्षितम् ॥ २२ ॥

**पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-**
**र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।**
**त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः**
**संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २३ ॥**

पाण्ड्विति । पाण्डुच्छायोपवनवृतयः पाण्डुच्छाया हरिणवर्णच्छाया उपवनवृतयः समीपवृतयः येषाम् । केतकैः केतकीपुष्पैः । सूचिभिन्नैः सूच्याकारेषु मुकुलाग्रेषु भिन्नैः विकसितैः । नीडारम्भैः कुलायोपक्रमैः । गृहबलिभुजां गृहेषु बलिहारिणामन्नभोजिनां, काकादीनामित्यर्थः । आकुलग्रामचैत्याः । चैत्यं नाम चतुष्पथोद्देशस्थितो वृक्षः ।

"चैत्यं चिताङ्के बुद्धाण्ड उद्देशद्रौ सुरालये"

इति यादवः । दशार्णा विन्ध्योत्तरस्थाः केचन जनपदाः ।

"दशार्णाः स्युर्वैदिकाला मालवाः स्युरवन्तयः"

इति यादवः । ननु 'पोटायुवति—'(२. १. ६५) इत्यादिसूत्रेण समासे कतिपयशब्दस्योत्तरपदत्वविधानाद् दिनकतिपयस्थायीति वक्तव्यम् । प्रायिकं चैतत् ।

"कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः"

इति भर्तृहरिवचनात् ॥ २३ ॥

**तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं**
**गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा ।**
**तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत् तत्**
**सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २४ ॥**

तेषामिति। तेषां दशार्णानाम्। दिक्षु प्रथितविदिशालक्षणां प्रसिद्धविदिशानामधेयाम्।

"लक्षणं कार्पिके चिह्ने नाम्नि मुद्राङ्कसंपदोः"

इति यादवः।

"बभूव विदिशानाम पुरी वेत्रवतीतटे"

इति कथासारे। विदिशेति कापि नद्यप्यस्ति।

"परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान्"

इति वचनात्। सा त्वन्यत्र देशे, वेत्रवतीपरिभोगस्योक्तत्वादित्यनुसन्धेयम्। राजधानीं प्रधाननगरीम्। तेषां राजधानीमित्यन्वयः। लब्धा इति पाठः। लब्धा लप्स्यते, कर्मणि लुडन्तमिदं रूपम्। राजधानीं प्राप्य त्वया कामुकत्वस्य फलं लप्स्यत इत्यर्थः। कुतो लप्स्यते इत्यपेक्षायामाह — तीरोपान्तस्तनितसुभगमिति। अनेनाधरोपान्तस्तनितसीत्कारसुभगत्वं च विवक्षितम्। यद् यस्मात्। तत् तस्मात्। तच्छब्देन प्रसिद्धं परामृश्यते। 'यच्छब्दनिकटवर्ती तच्छब्दः प्रसिद्धिं परामृशती'ति वचनात्। सभ्रूभङ्गं भ्रूभङ्गसहितम्। वेत्रवत्याश्चलोर्मि इति पाठः। चलोर्मि चलतरङ्गम्। इदं विशेषणं सभ्रूभङ्गविशेषणस्थानीयम्। कामिन्याः ससीत्कारं सभ्रूभङ्गं मुखमिव वेत्रवत्यास्तीरोपान्तस्तनितसुभगं चलोर्मि स्वादु तत् पयः पास्यतीति यस्मात् तस्मात् कामुकत्वस्य फलं त्वया लप्स्यत इत्यर्थः। उत्तरश्लोकपरिज्ञानायात्रेदमनुसन्धेयं — विदिशानगरवर्तिन्यः पण्याङ्गनाः सर्वाङ्गसुन्दर्यः सर्वललितकलाविचक्षणाः सर्वपुरुषावर्जनकुशलाश्च भवन्ति। तत्रत्याः पुनर्नागराः पुरुषास्ताभ्योऽप्यतिसुन्दराः सुभगयौवनाः स्त्रीसंभोगविदग्धाश्च भवन्ति। तेषां नागराणां सौन्दर्यातिशयेन तान् कामयमानाः पण्याङ्गनाः मात्रादिभयेन स्वगृहेषु भोक्तुमपारयन्त्यस्तस्मान्नगरान्निर्गत्य प्रत्यासन्नस्य नीचैराख्यस्य गिरेः सङ्केतस्थानभूतेषु शिलागृहेषु तैर्निर्दयं रतान्यनुभूयानुभूय पुनर्विदिशां गुप्तं प्रविशन्तीत्यैतिह्यमस्ति इति ॥ २४ ॥

---

१. 'दृप्ताः प्र' ख. पाठः.

तदेतिह्यं हृदये कुर्वन्नाह—

**नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-**
**स्त्वत्संपर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः ।**
**यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-**
**मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २५ ॥**

नीचैरिति। सुरतगृहवत्तया नीचैराख्यत्वं पर्वतस्य। तत्र तस्मिन् गिरौ। विश्रामहेतोः, 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (७. ३. ३४) इति प्रतिषेधात् विश्रमहेतोरिति वक्तव्यम्। विश्रामहेतोरित्यस्य रूपसिद्धिश्चान्द्रव्याकरणेनेत्यनुसन्धेयम् । प्रौढपुष्पैः परिणतपुष्पैः । कदम्बैरित्युक्तेऽपि कदम्बकुसुमैरित्यर्थो गृह्यते । कदम्बकुसुमानां पुलकसन्निवेशत्वमस्ति ।

"कदम्बः पुलकी श्रीमान् प्रावृषेण्यो हलिप्रियः'

इति यादवः । पण्यस्त्रीरतिपरिमलोद्गारिभिर्गणिकाजनरतिमर्दगन्धोद्गारिभिः। नागराणां विदिशानगरवासिनाम्। उद्दामानि विशृङ्खलानि । अयमभिसन्धिः—पण्यस्त्रीरतिपरिमलोद्गारीणि यस्य शिलावेश्मानि दृष्ट्वा तत्रत्या जना एवं विस्मयन्ते 'अहो नागराणां यौवनानि, यतः पण्याङ्गना अपि पणप्रदानं विना स्वसौभाग्येन वशीकृत्य स्वैरमेतेषु शिलागृहेषु भुञ्जत' इति ॥ २५ ॥

**विश्रान्तः सन् व्रज वननदीतीरजानां निषिञ्च-**
**न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ।**
**गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां**
**छायादानात् क्षणपरिचितः पुष्पलावीमुखानाम् ॥**

विश्रान्त इति । वननदीतीरजानाम्, अकृत्रिमत्वान्नदीतीरमुक्तम् । उद्यानानां पुष्पारामाणाम् । यूथिकाजालकानि मागधीनां प्रत्यग्रकुसुमजालानि । ननु

"तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि

इत्यत्र सिञ्चतेर्धातोः द्रवद्रव्यरूपममृतं कर्मीभवति । कथमत्र जलकणान् विहाय सिञ्चतेर्जालकानि कर्मत्वेनोक्तानि । किरतिसिञ्चतीत्यादीनां कुसुमजलादीनि कदाचित् कर्मीभवन्ति । कदाचित् करणीभवन्ति । गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां गण्डस्वेदापमार्जनकरस्पर्शवेदनाक्लान्तकर्णोत्पलानाम् । पुष्पलावीमुखानां, पुष्पं लुनन्तीति पुष्पलाव्यः । 'कर्मण्यण्' (३. २. १) इत्यण् । 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप् ॥ २६ ॥

वक्रः पन्थास्तव भवतु च प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा च भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितः स्याः ॥ २७ ॥

वक्र इति । चेति समुच्चये । उत्तराशां प्रस्थितस्य तव पन्थाः वक्रश्च भवतु । तथापि कार्यगौरवात् तत् सोढव्यमित्यभिप्रायः । अत्रेदमनुसन्धेयं — विन्ध्याद्रिप्रभवा विन्ध्यं निर्भिद्य उत्तरवाहिनी कापि नद्यस्ति निर्विन्ध्येति । तस्याः प्राक्तीरे कियन्तं चाध्वानं प्रागतिक्रम्य वर्तते खलूज्जयिनी । तस्मान्निर्विन्ध्यायाः पश्चिमतीरदेशेनोत्तरां गच्छतो मेघस्योज्जयिनीगमने पन्था वक्रः स्यादिति । सौधोत्सङ्गप्रणयविमुखो मा च भूरुज्जयिन्या इति (पाठः) । प्रणयः परिचयः ।

"प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि च"

इति यादवः । चकारो वाक्यान्तरसमुच्चये । अनया मार्गवक्रत्वालोचनयापि तवोज्जयिनीसौधोत्सङ्गपरिचये वैमुख्यं च मा भूदित्यर्थः । वञ्चितः स्या इति, यदि तव तां रतिं न वेदयामि, ततस्त्वं मया वञ्चितः स्या इत्यर्थः । यद्वा वञ्चितः स्याः व्यर्थजन्मा भविष्यसीति ॥

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।

निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः संनिपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २८ ॥

वीचीति । संसर्पन्त्याः स्खलितसुभगमिति, अनेन विलासगमनमपि ध्वन्यते । रसाभ्यन्तरः, अनेन रसशब्देन जलं शृङ्गारश्च विवक्षितम् । संनिपत्य सङ्गमं कृत्वा । एवं विलासमाविष्कुर्वत्या निर्विन्ध्याया रतिमनुभवेत्यर्थः । प्रार्थनां विना कथमनुभवामीत्याशङ्क्याह — स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु इति । प्रणयवचनं प्रार्थनावाक्यम् । प्रियेषु स्त्रीणामाद्यं प्रार्थनावाक्यं विभ्रमो हि, स तु तस्याः सञ्जात इति भावः । प्रस्तुतमुज्जयिनीगमनं विहाय मार्गवशान्निर्विन्ध्यागमनमुक्तमित्यनुसन्धेयम् ॥ २८ ॥

वेणीभूतप्रतनुसलिला सा त्वतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग! विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ २९ ॥

वेणीभूतप्रतनुसलिला इति पाठः । वेणीशब्देन स्रोतश्च केशबन्धश्च विवक्षितः । सा त्वतीतस्येति पाठः । सा निर्विन्ध्या । अतीतस्यातिक्रान्तस्य, भविष्यत इति शेषः । सिन्धुर्नदी । पाण्डुच्छाया, अनेन विरहपाण्डुत्वं च विवक्षितम् । विरहावस्थयेति पाठः । विधिना वृष्टिमोक्षेण । त्वयैव, एनामनुभूय स्थितवता त्वयैवेत्यर्थः । सुभग! अतीतस्य ते विरहावस्थया वेणीभूतप्रतनुसलिला तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः पाण्डुच्छाया ते सौभाग्यं व्यञ्जयन्ती सा सिन्धुः येन जलमोक्षेण कार्श्यं त्यजति स विधिः प्रियतमभूतेन त्वयैव कार्य इत्यर्थः । तामतीतस्य इति पाठमादृत्य सिन्धुरिति नद्यन्तरमुच्यत इति केचिद् वदन्ति । तदानीमर्थश्चापुष्टः । अत्र देशे सिन्धुरिति कापि नदी नास्ति । काश्मीरेषु सिन्धुः प्रवहतीत्यनुसन्धेयम् ॥ २९ ॥

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥

प्राप्येति । उदयनकथाकोविदग्रामवृद्धान् । उदयनो वत्सराजः, तस्य महान्त्यद्भुतानि कर्माणि विद्यन्ते, तत्कथापण्डितग्रामवृद्धानिति। पूर्वोद्दिष्टां सा च भूरुज्जयिन्या इति पूर्वोद्दिष्टाम् । विशालाम्, उज्जयिन्या विशालेति नामापि। 'विशालोज्जयिनी समे'त्यमरः। उज्जयिन्याः स्वर्गसाम्यं पौराणां देवसाधर्म्यं चाभिप्रेत्याह — स्वल्पीभूत इति । सुचरितफले सुचरितस्य स्वर्गाख्ये फले । गां भूमिम् । अयमभिप्रायः— स्वर्गिणः स्वपुण्यफले सकलस्वर्गोपभोगे स्वल्पावशिष्ट सत्यस्मात् फलोपभोगात् पुण्यानि क्षीयन्ते, सकलस्वर्गोपभोगोऽपि दुर्लभ इति मत्वा शेषैः स्वकीयैः पुण्यैर्भूमौ स्वपुण्यानुरूपं स्वर्गैकखण्डं यदि कुर्युस्तदिव विराजमानामित्यर्थः । ननु "सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखं, ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते" इत्यापस्तम्बवचनात् प्राणिनः कर्मशेषयुक्ता एव जायन्त इति प्रतीयते । तस्मादयमर्थः किमित्युपेक्षित इति । एतत्पक्षाश्रयणे विशालायाः समुत्कर्षो न स्यात्, कर्मशेषयोगेन जननस्य सर्वप्राणिसाधारणत्वादित्यलं विस्तरेण ॥

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३१ ॥

दीर्घीकुर्वन्निति । सारसकूजितस्य दीर्घीभावो वातानुधावनेन । स्फुटितकमलामोदमैत्रीकषायः विकसितकमलपरिमलसंपर्कसुरभिः ।

"रागद्रव्ये कषायोऽस्त्री निर्यासे सौरभे रसे"

इति यादवः । प्रार्थनाचाटुकारः प्रार्थनया प्रियवचनकारी । अयमत्र समाधिः — कृतापराधः सुभगः प्रियतमः प्रातरेत्य स्वप्रेयसीवचनस्यावसरमवितरन्नेव पटु मदकलं स्ववचनं दीर्घीकुर्वन् पराङ्गनापरिभोगसुरभिगन्धः प्रेयसीं मदीयमपराधं क्षमस्वेति प्रार्थयमानश्चाटुकारी तस्याः पादपतनादङ्गानुकूलः सुरतालाभजनितां ग्लानिं यथा हरति तथा सिप्रावात इति ॥ ३१ ॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्तोपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथाः
पश्यन् लक्ष्मीं ललितवनितापादरागाङ्कितेषु ॥ ३२ ॥

जालेति । गवाक्षोद्वान्तैः केशसंस्कारधूपैः, वनितानामिति शेषः । ललितवनितापादरागाङ्कितेष्विति वक्ष्यमाणत्वाद् वनितापदस्याप्रयोगः । कुसुमसुरभिष्वध्वखेदं नयेथाः पश्यन् लक्ष्मीमिति पाठः । श्रीविशालामित्युक्तत्वात् पश्यन् लक्ष्मीमित्युक्तम् । नीत्वा खेदमिति पाठे वक्ष्यमाणेन 'पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य' इत्यनेन सम्बन्धः ॥ ३२ ॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३३ ॥

भर्तुरिति । भर्तुः स्वामिनः कण्ठच्छविरिति कण्ठप्रभेति दृश्यमान इत्यर्थः । ईदृशः प्रयोगश्च दृश्यते —

"षण्ड इत्यन्यनारीभिः स्वस्त्रीभिर्धूर्त इत्यपि ।
शमीति साधुभिर्वीरैः साहसीति य ईक्ष्यते ॥"

इति । त्रिभुवनगुरोः । उज्जयिन्यां महाकालमिति किमपि देवतायतनमस्ति । तत्र परमेश्वरः सदा संनिधत्ते, सर्वेभ्यो वरांश्च ददातीति प्रसिद्धम् । तस्मात् त्रिभुवनगुरोरित्युक्तम् । चण्डेश्वरस्य, इदं महाकालनिकेतनेश्वरस्य देवस्याभिधानमिति केचित् । अन्ये रौद्राकारत्वाच्चण्डेश्वरपदं प्रयुक्तमिति वदन्ति । धूतोद्यानमिति पाठः । कुवलयरजोगन्धिभिः कुवलयपरागगन्धिभिरित्यर्थः । गन्धवत्याः, इदं नाम । तोयक्रीडाभिरतयुवतिस्नानतिक्तैर्मरुद्भिरिति पाठे स्नानं स्नानीयम् । 'स्नानीयेऽभिषवे स्नानम्' इति यादवः । गन्धवत्या मरुद्भिरिति संबन्धः । अत्रेदमनुसन्धेयं — पूर्वार्धे तु पुण्यं यायास्त्रिभुवनगुरोर्धाम इति धाम्नः पावनत्वमुक्तम् । उत्तरार्धे तु तस्यैव धाम्नः उद्यानादिमत्तया विलासास्पदत्वं चोक्तमिति । ननु कुवलयरजोगन्धिभिरित्यनेन गन्धवतीमरुतां गन्धवत्त्वमुक्तम् । पुनश्च कथं तोयक्रीडाभिरतयुवतिस्नानतिक्तैर्मरुद्भिरिति गन्धवत्त्वमुच्यत इति[1] । उच्यते । विलासिनीनां शरीरसंस्कारहेतुना कुसुमादिना स्त्रीसंभोगसंमर्देन च उभयथा गन्धवत्त्वमस्ति । तत्समाधिना मरुतामपि विशेषणमुक्तमिति ॥ ३३ ॥

अप्यन्यस्मिन् जलधर ! महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥

अपीति । अप्यन्यस्मिन् सन्ध्यासमयादन्यस्मिन्नपि काल इत्यर्थः । महाकालम्, इदमुज्जयिन्यामीश्वरस्य स्थानम् । स्थातव्यं ते स्थातव्यं त्वया । नयनेन यावान् देशो दृश्यः तावान् देशो नयनविषयः । नयनविषयं यावदतिक्रामतीत्यर्थः । सन्ध्याबलिपटहतां, सन्ध्यासमयभूतबलिप्रदानार्थः पटहः सन्ध्याबलिपटहः । आमन्द्राणामीषद्गम्भीराणाम् 'मन्द्रस्तु गम्भीरे' इत्यमरः ॥ ३४ ॥

---

१. 'ति वि' क. पाठः.

पादन्यासक्वणितरशनास्तत्र लीलावधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥

पादेति । पादन्यासक्वणितरशनाः नृत्तार्थैः पादन्यासैः शब्दितकाञ्चीकलापाः । क्वणतेरकर्मकत्वात् 'गत्यर्थाकर्मक —'(३.४.७२) इति कर्तरि निष्ठा । तत्र तस्मिन् सन्ध्यावलौ । लीलावधूतैर्विलाससञ्चारितैः । रत्नच्छायाखचितवलिभिः रत्नच्छायासंबद्धचामरदण्डवलिभङ्गैः । चामरैर्महाकालस्य सेवाचामरैः । नखपदसुखान् नखपदानीव सौख्यहेतून् । अयमभिप्रायः — महाकालं सेवित्वा सेवोपकरणानि तान्येव चामराणि धारयन्त्यः क्लान्तहस्ता देवदास्यस्तत्र बलिप्रदानसमये नृत्यन्ति । तासामुपरि सेवाक्लेशापहान् नखपदसुखान् वर्षप्रथमबिन्दून् भवान् यदि मुञ्चति, ताश्चानन्यदुर्लभान् मधुकरश्रेणीदीर्घान् कटाक्षान् त्वय्यामोक्ष्यन्ति । आमोचनमिन्दीवरमालासमाधिनोक्तमिति । अन्ये त्वाहुः—

"दुकूलदण्डिकामालाखड्गचामरगोलकैः ।
हस्तसञ्चारिभिः कुर्युर्नृत्तं तद् देशिकं मतम् ॥"

इति वचनात् चामराणि धारयन्त्य एव देशान्तरे नृत्तं कुर्वन्तीति ॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३६ ॥

पश्चादिति । पश्चात् । उच्चैर्भुजतरुवनमित्येकं पदम् । भुजवनमिति वक्तव्ये तरुशब्दप्रयोगो मेघावतरणयोग्यत्वं सूचयति । प्रतिनवजपापुष्परक्तं प्रत्यग्रजपाकुसुमलोहितम् । शान्तोद्वेगस्तिमितनयनं, भयङ्करस्य गजाजिनस्यादर्शनाद् देव्याः शान्त उद्वेगः ॥ ३६ ॥

१. 'भाः' ख. पाठः.

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा च भूर्विक्लवास्ताः ॥ ३७ ॥

गच्छन्तीनामिति । तत्र उज्जयिन्यां नरपतिपथे राजमार्गे । सूचिभेद्यैः, अतिबहुलत्वात् सूच्यग्रभेदनार्हैरित्यर्थः । मा च भूरिति, चकारो दर्शयेति क्रियया सेवासमुच्चयार्थः ॥ ३७ ॥

तां कस्याञ्चिद् भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३८ ॥

तामिति । कस्याञ्चित् सुप्तपारावतायाम् । अनेन विशेषणेन पौरजनस्तावद् वर्षासमयत्वाद् वलभिं विहाय गर्भगृहे शेते, तत्र पारावता एव भवन्ति, तेष्वपि सुप्तेषु निश्शब्दा भवन्तीत्युक्तम् । चिरविलसनाद्, विलसनशब्देन स्फुरणं विलासश्च विवक्षितः । वाहयेत् प्रापयेदित्यर्थः । वहन्तं यान्तमध्वानं वाहयतीति वाहयेदिति रूपम् । अध्वानि च यातीति प्रयोगोऽस्ति ।

"एष पन्था विदर्भाणामेष यास्यति कोसलान्"

इति दर्शनात् । अभ्युपेतार्था कृत्या कार्यक्रिया यैस्ते ।

"कृत्या क्रियादेवतयोः कार्ये स्त्री कुपिते त्रिषु"

इति यादवः ॥ ३८ ॥

तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥

तस्मिन्निति । खण्डितानां, भर्तुरन्यासङ्गदर्शनादीर्ष्यालुः खण्डिता ।

"ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता"

इति दशरूपके । शान्तिमुपरतिं नेयं प्रापयितव्यम् वर्त्म उदयवर्त्म । त्वया प्राचीमुखे निरुद्धे प्रणयिनो रात्रिशङ्कया प्रभातेऽपि खण्डितानां प्रसादं न कुर्युः । अतो भानोरुदयवर्त्म त्यजेत्यभिप्रायः । सोऽपि भानुरपि नलिन्याः खण्डिताया इत्येव । तस्याः खण्डितात्वं भानोर्देशान्तरगमनात् । प्रत्यावृत्तः प्रतिनिवृत्तः । कररुधि अनेन हस्तरोधश्च प्रतीयते ॥ ३९ ॥

**गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने**

**छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।**

**तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-**

**न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४० ॥**

गम्भीराया इति । गम्भीराशब्देनोदात्तनायिका च प्रतीयते । छायात्मा प्रतिबिम्बात्मा ।

"छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययोः"

इति यादवः । अनेन विशेषणेन परमात्मा प्रतिबिम्बं च ध्वन्यते । प्रकृतिसुभगः प्रकृत्या सुभगः, सांख्याभिमतस्य प्रकृत्याख्यस्य तत्त्वस्य संयोगेन सुभग इत्यर्थोऽपि ग्राह्यः । प्रसन्ने चेतसि प्रकृतिसुभगः परमात्मबिम्बः प्रतिफलतीत्यर्थोऽपि ध्वन्यत इत्यवगन्तव्यम् । त्वं स्वरूपेण तां गम्भीरां प्रवेष्टुं यद्यपि नेच्छसि, तथापि तवच्छायात्मा प्रवेक्ष्यत्यवश्यम् । तस्मात् त्वं धैर्यं कृत्वा चटुलशफरोद्वर्तनप्रेक्षितान्यवमानयितुं नार्हस्येव । ततो मत्कार्यविलम्बो भविष्यतीति भावः ॥ ४० ॥

उक्तमर्थं विवृणोति —

**तस्याः किञ्चित् करधृतमिव प्राप्तवानीरशाखं**

**नीत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।**

**प्रस्थानं ते कथमपि सखे! लम्बमानस्य भावि**
**ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥**

तस्या इति । मुक्तरोधोनितम्बं मुक्तरोधः कटीप्रदेशः ।

"नितम्बः पश्चिमे श्रोणिभागे च कटके कटौ"

इति यादवः । ज्ञातास्वादः ज्ञातस्त्रीसंभोगरसः । विवृतजघनां विवृतकटिप्रदेशाम् ।

"जघनं स्यात् कटौ पूर्वश्रोणिभागापराङ्गयोः"

इति यादवः ॥ ४१ ॥

**त्वन्निःष्यन्दोच्छ्वसितवसुधागन्धसंपर्करम्यः**
**स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।**
**नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते**
**शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥४२॥**

त्वन्निःष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः त्वदीयनवजलबृंहितवसुधागन्धसम्पर्करम्यः । अनेन वायोर्गन्ध(व)त्त्वमुक्तम् । स्रोतोरन्ध्रध्वनितसुभगं, स्रोतसां रन्ध्रं स्रोतोरन्ध्रमिति जलप्रणालो विवक्षितः । स्रोतोरन्ध्रसंमूर्छज्जलध्वनितसुभगमित्यर्थः । दन्तिभिः सरन्ध्रेण करेण पीयमानो वायुः जलप्रणालनिस्सरत्प्रवाह इव शब्दायत इत्यर्थः । अनेन मान्द्यमुक्तम् । नीचैः । अधस्ताद् दन्तिभिः पीयमानत्वान्मन्दवेगस्तव नीचैरेव वास्यति । तेन दीर्घाध्वगामिनस्ते वायुप्रेरणया श्रान्तिर्न भविष्यतीत्यभिप्रायः । देवपूर्वं देवशब्दपूर्वं गिरिं गिरिशब्दम् । एतौ देवगिरिशब्दौ स्वरूपेण मेघानभिगम्यत्वाद् मेघाभिगम्यं स्वसमुदायवाच्यं देवगिरिं लक्षयत इत्यनुसन्धेयम् । काननोदुम्बराणाम् उदुम्बरफलानाम् । कृद्योगे षष्ठी ॥ ४२ ॥

**तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा**
**पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः ।**

रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥ ४३ ॥

तत्रेति । तत्र देवगिरौ नियतवसतिम् । पुरा किल देवार्थमसुरान् निहत्य तत्र विश्रान्तः स्कन्दो देवैर्याचितः सन् तत्रैव मद्दर्शनायागताभ्यां शिवाभ्यां सह नित्यं वसामीति प्रतिज्ञातवान् । तस्मात् तत्र स्कन्दस्य नियतवसतित्वमुक्तमित्यैतिह्यमनुसन्धेयम् । पुष्पमेघीकृतात्मा, कामरूपत्वादेतन्मेघस्य संभवति । उक्तमैतिह्यं किञ्चिद् विवृणोति — रक्षाहेतोरिति । इयं 'षष्ठी हेतुप्रयोगे' (२. ३. २६) इति षष्ठी । अत्यादित्यमतिक्रान्तादित्यम् । हुतवहमुखे संभृतं तद्धि तेज इति स्कन्दस्याग्निमुखोत्पत्तेरुक्तम् ॥ ४३ ॥

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलक्षेपि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४४ ॥

ज्योतिरिति । कुवलयदलक्षेपीति पाठः । कुवलयदलनिन्दकमित्यर्थः । धौतापाङ्गं शोधितापाङ्गम् । शोधनं च धवलापाङ्गोज्ज्वलीकरणम् । अनेन नर्तकस्य मुखमण्डनसमाधिश्च प्रतीयते । पावकेः स्कन्दस्य । अनेन हुतवहमुखे संभृतं तद्धि तेज इत्यस्य विवरणं कृतम् । पश्चात् पुष्पस्नपनात् पश्चात् । अद्रिग्रहणगुरुभिः, अद्रिग्रहणं गुहाग्रहणम् । नर्तयेथाः, तदाराधनं नृत्तमत्र विवक्षितं, तदभिषेकस्योक्तत्वाद्, आराध्यैनमिति वक्ष्यमाणत्वाच्च । अनेन श्लोकेन शिवयोः सन्निधानमुक्तमित्यनुसन्धेयम् ॥ ४४ ॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद् वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥

आराध्येति । सिद्धद्वन्द्वैः, स्कन्दमुपवीणायितुमागच्छद्भिरिति भावः । वीणिभिर्वीणावद्भिः । व्रीह्यादित्वादिनिः ।

"व्रीहिः शिखाष्टका माला पताका वर्मकर्मणी ।
मेखला वडवा वीणा संज्ञा चर्म बलाकया ॥"

इति व्रीह्यादिगणः । जलसिक्ततन्त्रीका वीणा न क्वणतीति सिद्धानां मेघमार्गपरित्यागः । वक्ष्यमाणार्थपरिज्ञानायात्रेदमनुसन्धेयं — दशपुराख्यस्य पुरस्याधिपतिः पुण्यश्लोकः कश्चन रन्तिदेव इति राजा बभूव । तदीयानां धेनूनां मध्ये प्रतिदिनं काञ्चनखुरशृङ्गाद्यवयवैः सञ्चरमाणाः काश्चन देवगव्यः समवतीर्य स्वैरं विहृत्य गच्छन्ति । तासां रूपं दृष्ट्वा रन्तिदेवधेनवः पप्रच्छुः कुतो युष्माकमीदृशं रूपं सञ्जातमिति । ताः पुनरब्रुवन् पुरा यज्ञेषु संज्ञपिता वयमीदृश्यो जाता इति । ताश्च धेनवः स्वामिनं रन्तिदेवमुपगम्याब्रुवन् — हे राजन्! एतावन्तं कालं भवतो वयमुपकृतवत्यः । तस्मादस्मान् क्रतुषु त्वमालभेथाः, येन दिव्यरूपा भवामेति । सोऽपि ता यज्ञेषु विशस्य तासां चर्माणि पर्वतमिव क्वापि संबभार । तस्मात् सरक्तानिःष्यन्दाच्चर्मपर्वतात् कापि नदी प्रवहति, यां चर्मप्रभवत्वाच्चर्मण्वतीमाहुरिति भारतीयमुपाख्यानं हृदये कृत्वा तां नदीं तस्य कीर्तित्वेन वर्णयन्नाह — व्यालम्बेथा इति । व्यालम्बेथाः विनम्य प्राप्नुहि । सुरभितनयालम्भजां, सुरभितनया धेनवः तासामालम्भो विशसनम् । स्रोतोमूर्त्या चर्मण्वतीजलमूर्त्या ॥ ४५ ॥

मया तस्याः का माननेत्यपेक्षायामाह —

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचोरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४६ ॥

त्वयीति । पृथुमपि तनुं पृथुमपि दूरभावात् तनुं प्रवाहमित्यन्वयः । गगनगतयः खेचराः सिद्धादयः । एकं मुक्तागुणमिति, एकशब्द एकावलीसमाधिना प्रोक्तः ॥ ४६ ॥

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥ ४७ ॥

तामिति । उपरिविलसत्कृष्णशारप्रभाणां 'कृष्णरक्तसितः शारः' इति यादवप्रकाशेन शारशब्दो वर्णत्रयसाङ्कर्यवाचको यद्यपि अत्र पृथगेव कृष्णशब्दोपादानात् शारशब्दः सितरक्तवर्णयोः साङ्कर्ये सङ्कुचितवृत्तिः । तथा श्रीरामायणप्रयोगश्च विद्यते—'कृष्णशारे विलोचने' इति । सप्तशत्यां च—'एक्को वि काळसारो ण देइ' इति । कुन्दक्षेपानुगमधुकरश्रीमुषाम् । कुन्दस्य क्षेपो वायुना प्रेरणम् । मधुकरश्रीर्मधुकरशोभा । रक्तकुसुमोदरेषु मधुपानार्थं प्रवेशान्मधुकराणां तत्परागपाटलत्वं च स्वभावतो नीलत्वं च विद्यत इत्यनुसन्धेयम् । आत्मबिम्बं स्वशरीरमण्डलम् ।

"बिम्बोऽस्त्री मण्डलसमप्रतिमामुखलक्ष्मसु ।
प्रतिबिम्बे तत्प्रकृतौ"

इति यादवः । दशपुरवधूनेत्रकौतूहलानाम् । वधूः स्त्री । नेत्राणां कौतूहलादागतानि उन्मेषणादीनि नेत्रकौतूहलानि । तस्मान्नेत्रकौतूहलानां नेत्रोन्मेषणादीनां परिचितभ्रूलताविभ्रमत्वमुपरिविलसत्कृष्णशारप्रभत्वं च संभवति ॥ ४७ ॥

ब्रह्मावर्तं जनपदमथच्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद् भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४८ ॥

ब्रह्मेति । ब्रह्मावर्त इति मध्यदेशे पुण्यः कोऽपि जनपदः । अत्र मनुः—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥"

इति । अथानन्तरम् । छायया गाहमानः, अनेन तस्य पुण्यदेशत्वात् स्वरूपेणाक्रमणं न युक्तमिति सूचितम् । क्षत्रप्रधनपिशुनम्, अद्यापि शिरःकपालादिमत्तया पाण्डवानां क्षत्रियाणां युद्धसूचकम्। कौरवं कुरूणां संबन्धि । राजन्यानां मूर्धाभिषिक्तानाम् । गाण्डीवधन्वा अर्जुनः। 'धनुषश्च' (५. ४. १३२) इत्यनङादेशः। मुखानि, मुखग्रहणमनेककर्माश्रयत्वात् कृतम् ॥ ४८ ॥

यद्यपि प्रकृत्या पुण्यं कुरुक्षेत्रं, तथापि यस्मिन् प्रदेशे युद्धमासीत् तं नरशिरःकपालादिदूषितं प्राप्य कथमशुद्धो भविष्यामीत्याशङ्क्याह —

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुस्नेहात् समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य ! सारस्वतीना-
मन्तःशुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥४९॥

हित्वेति । अभिमतरसाम् अभिमतरसत्वं रेवतीलोचनप्रतिबिम्बितां गत्वा। बन्धुस्नेहाद् धर्मपुत्रादिषु दुर्योधनादिषु च तुल्यत्वेन वर्तमानादित्यर्थः । समरविमुखस्त्यक्तसमरः । लाङ्गली, लाङ्गलमस्यास्तीति लाङ्गली बलभद्रः । अनेन सायुधोऽपि बन्धुस्नेहात् समरविमुख इत्यवगम्यते । याः सिषेव इति अपो भक्षयित्वा तपश्चचारेत्यर्थः । अभिगममभिमुखत्वेन गमनम् । अन्तःशुद्धस्त्वमसि भवितेति । असीति मध्यमप्रतिरूपकमव्ययमिदम् । तथा माघकाव्ये — "स्वयमेवशन्तनुतनूज! यमसि गणमर्घ्यमभ्यधाः"(स० १५.श्लो० २०) इति । भविता, तृजन्तमिदम्। अन्तःशुद्धो भवितासि अन्तःशुद्धो भविष्यसीत्यर्थः । पापकाष्ण्याभ्यां मुक्तद्रव्यवाचिनः शुद्धशब्दस्य श्रवणात् तव कृष्णवर्णलोपो न शङ्कनीय इत्याशङ्क्याह — वर्णमात्रेण कृष्ण इति । वर्णमात्रेण वर्णेनैव । तव चारुत्वहेतोः कृष्णवर्णस्य विपर्ययो न भवतीत्यभिप्रायः ॥ ४९ ॥

तस्माद् गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीं वक्त्रेभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५० ॥

तस्मादिति । अनुकनखलम् । कनखल इति गङ्गाद्वारे कोऽपि पर्वतः । तथा महाभारते —

"गङ्गाद्वारं युधिष्ठिर! ।
पुण्यं तत् ख्यायते राजन्! ब्रह्मर्षिगणसेवितम् ॥
सनत्कुमारः कौरव्य! पुण्यः कनखलस्तथा ।
पर्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः ॥"

इति । शैलराजावतीर्णां हिमवतः प्रवृत्तां हिमवतः प्रसूतां च । सगरतनयस्वर्गसोपानपङ्क्तिं, सगरपुत्राणां कथा प्रसिद्धा । गौरीं वक्त्रेभ्रुकुटिरचनामिति पाठः । वक्त्रेभ्रुकुटिरचनां वक्त्रे भ्रुकुटिरचना यस्याः सा तथोक्ता । 'अमूर्धमस्तकात्' (६. ३. १२) इति सप्तम्या अलुक् । भ्रुकुटिर्भ्रूकौटिल्यं, कोपोल्लसितभ्रूभङ्गामित्यर्थः । केशग्रहणम्, अनेन केशेष्ववस्थानं बलात्कारेण केशग्रहणं च विवक्षितम् । इन्दुलग्नोर्मिहस्ता अनेन केशग्रहणे मालत्यादिकृतशेखरलग्नहस्तत्वं च ध्वन्यते । अयमभिप्रायः — आवयोर्द्वयोरपि शैलराजप्रभवत्वे साधारणे त्वं शम्भोरर्धहरासि । अहं तु तस्य मूर्धन्यवस्थानं कृतवतीति केशग्रहणदर्शनकुपितां गौरीं फेनव्याजेन हसन्तीव या विभातीत्यर्थः ॥ ५० ॥

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसिच्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५१ ॥

तस्या इति । व्योम्नि पश्चार्धलम्बी आकाशे पृष्ठभागेन लम्बमानः । लोके हि पश्चादुत्तरशब्दौ पर्यायौ भवतः । अत्र पश्चार्धशब्देन कि-

मुत्तरार्धं नेष्यते । उक्तंच — 'तं वाहनादवनतोत्तरकायम्' (रघु० ९. ६०)इति । पश्चार्धशब्दस्य मृगादिषु पृष्ठभागे एव प्रयोगदर्शनात् । तथा शाकुन्तले — 'पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्' इति । तर्कयेश्चिन्तयेः । व्योम्नि तिर्यक् पश्चार्धलम्बी तस्यास्तदम्भः पातुं तर्कयेश्चेदित्यर्थः । संसर्पन्त्या अवगाहमानया । संपादि ससर्पन्त्ये-त्यन्वयः । छायया प्रतिबिम्बेन अस्थानोपगतयमुनासङ्गमा गङ्गायमु-नयोः प्रयागाख्य एव तीर्थे सङ्गमो भवति । ततोऽन्यत् सर्वमस्थानम् । विशिष्टयोः समागमसमाधिरत्र ध्वन्यते ॥ ५१ ॥

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शुभ्रां शोभां त्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५२ ॥

आसीनानामिति । नाभिगन्धैर्मृगमदगन्धैः । 'मृगनाभिर्मृग-मदः' इत्यमरः । मृगाणामित्युक्तत्वाद् मृगनाभिगन्धैरित्यनुक्तम् । तस्या एव प्रभवं गङ्गाया एवोत्पत्तिस्थानम् । वक्ष्यसि, वहतेरिदं रूपं, वोढा भविष्यसि । शुभ्रां दीप्ताम् । 'शुभ्रः स्याद् दीप्तशुक्लयोः' इत्यमरः । पङ्को-पमानादुपेक्षितः शुक्लवर्णः । (शुभ्र ? शोभां)त्रिनयनवृषोत्खातपङ्कोपमेया-मिति पाठः । कामपि वधूं भुक्त्वा तस्या एव जन्मगृहे गन्धादिभिः श्रममपहरतो जामातुः कान्तिरत्र ध्वन्यते ॥ ५२ ॥

तं चेद् वायौ सरति सरलस्कन्धसङ्घट्टजन्मा
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ५३ ॥

तमिति । सरलस्कन्धसंघट्टजन्मा । सरलो वृक्षविशेषः । स्क-न्धशब्देन स्कन्धशाखा विवक्षिता । हिमजलस्वरूपत्वत् तस्य हिमवतः

किमग्निना व्यसनमित्यपेक्षायामाह— उल्काक्षपितचमरीवालभार इति। दवाग्निः वनवह्निः। वायौ सरति सति सरलस्कन्धसंघट्टजन्मा दवाग्निरुल्काक्षपितचमरीवालभारो भूत्वा तं बाधेत चेदित्यर्थः। वारिधारासहस्रैः वारिधाराणां सहस्रसंख्याभिः। अत्र सहस्रशब्दः संख्यावचनोऽपि क्रियासमन्वयसामर्थ्याभावात् संख्येये पर्यवस्यतीत्येव बोद्धव्यं, वारिधाराभिरित्यर्थः॥ ५३॥

**ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्**
**मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम्।**
**तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्**
**के वा न स्युः परिभवफला निष्फलारम्भयत्नाः॥**

य इति। संरम्भोत्पतनरभसा इति, संरम्भः कोपः, कोपोत्पतनवेगिन इत्यर्थः। स्वाङ्गभङ्गाय स्वशरीरभङ्गाय। मुक्ताध्वानं शरभाणां मार्गं मुक्त्वा दूरगामिनम्। मुक्तमार्गत्वात् त्वयि शरभाणां लङ्घनं न संभवति, तेषां शरीरभङ्ग एव भविष्यतीत्यभिप्रायः। तुमुलकरकावृष्टिपातावकीर्णान्। करको घनोपलः। 'घनोपलस्तु करके' इति यादवः। करकाणाम् आ(वृष्टिः?) समन्ताद् वृष्टिपातः। परिभवफलाः तिरस्कारः फलं येषाम्। निष्फलारम्भयत्नाः निष्फला आरम्भयत्नाश्चेति कर्मधारयः। आरम्भयत्नाः कर्मव्यापाराः। आरम्भयत्नानां नैष्फल्यं मेघाभिलङ्घनस्याभावात्। यद्वा निष्फला इति पदच्छेदः। निष्फला अफलाः। रम्भयत्नाः संरम्भयत्नाः। 'रम्भस्तु संरम्भे स्त्री मोचाप्सरसोरि'ति केशवः। के वा निष्फलाः संरम्भयत्नाः परिभवफला न स्युरित्यर्थः॥ ५४॥

**तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः**
**शश्वत् सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः।**
**यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः**
**कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः॥ ५५॥**

तत्रेति । हिमवतः कस्यांचिच्छिलायां रुद्रपादन्यासो विद्यत इति प्रसिद्धम् । शश्वत् सिद्धैरुपहृतबलिं सर्वदा सिद्धैरु(पहृतो)पहारम् ।

"बलिः पूजोपहारे च दैत्यभेदे करेऽपि च"

इति यादवः । अनेन ज्ञानोपायः सूचितः । परीयाः परित ईयाः प्रदक्षिणं कुर्वीथा इत्यर्थः । करणविगमात्, करणं शरीरम् ।

"करणं साधकतमक्षेत्रगात्रेन्द्रियेष्वपि"

इति यादवः । शरीरपरित्यागादूर्ध्वमित्यर्थः । कल्पिष्यन्ते स्थिरगणपदप्राप्तय इति । 'नमःस्वस्तिस्वाहास्वधालम्—' (२. ३. १६) इति सूत्रे त्वलंशब्दस्यार्थग्रहणात् पर्याप्तिवाचिनः क्लृपिधातोर्योगे स्थिरगणपदप्राप्तय इति चतुर्थीनिर्देशः ॥ ५५ ॥

**शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः**
**संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।**
**निर्ह्रादी ते मुरव इव चेत् कन्दरेषु ध्वनिः स्यात्**
**सङ्गीतार्थो ननु पशुपतेर्नृत्यतस्तत्र पूर्णः ॥ ५६ ॥**

शब्देति । 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' (३. १. १७) इति क्यङ् । संसक्ताभिः भक्तिमतीभिः । शब्दायन्ते गीयते इति च वर्तमाननिर्देशः सर्वदा संभवात् कृतः । निर्ह्रादी ते मुरव इव चेत् कन्दरेषु ध्वनिः स्यादिति ।

"निर्ह्रादो रवणो नादः क्ष्वेडो ध्वानो ध्वनिः कलः"

इति यादवः । पर्यायत्वेन यद्यपि चरन्ति तथाप्यत्रानुनादो निर्ह्रादत्वेन विवक्षितः । मुरव इति सप्तम्यन्तः । मुरवे निर्ह्रादी ध्वनिरिव कन्दरेषु ध्वनिस्ते स्याच्चेदित्यर्थः । सङ्गीतार्थः सङ्गीतस्य हेतुः । सङ्गीतं नाम प्रेक्षणीयनृत्तगीतवाद्यात्मकं त्रयम् । ननु सङ्गीतशब्दस्य नृत्तादित्रयवाचकत्वं नास्ति, नाटकेषु सङ्गीतकमनुतिष्ठामीति दर्शनात् । सङ्गीतशब्दस्तु गानमात्रे प्रयुज्यते । तथा कुमारसंभवे— 'वनान्तसङ्गीतसखीररोदयत्' इति । वक्ष्यति च — 'सङ्गीताय प्रहतमुरवा' इति ।

---

१. 'र' क. पाठः

कथमत्र सङ्गीतशब्दस्य नृत्तादित्रयवाचकत्वमस्तीति व्याख्यायते इति । उच्यते । सङ्गीतशब्दस्यैव नृत्तादित्रयवाचकत्वं यादवेनोक्तं—

"नृत्तं गीतं वाद्यमिति नाट्यं तौर्यत्रिकं त्रिकम् ।
सङ्गीतं प्रेक्षणार्थेऽस्मिन्"

इति । पशुपतेर्नृत्यतस्तत्र पूर्ण इति पाठः । पशुपतेस्तत्र भावी (समग्रः) इति पाठे तु नृत्तानुपादानात् सङ्गीतार्थः पूर्णो न स्यात् । अन्ये तु सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समस्त इति पठन्ति । पादन्यासमन्तरेण स्वरूपेणापि पशुपतिस्तत्र वसतीति प्रसिद्धम् ॥ ५६ ॥

**प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्**
**हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम् ।**
**तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी**
**श्यामः पादो बलिविमथनाभ्युद्यतस्येव विष्णोः ॥**

प्रालेयेति । तांस्तान् विशेषान् 'तस्माद् गच्छेरनुकनखलम्' इत्युक्तान् विशेषान् । हंसद्वारं हंसानां मानसाख्यसरोगमनद्वारम् । भृगुपतियशोवर्त्म । अत्रेदमनुसन्धेयं—स्कन्देन क्रौञ्चारातिना स्पर्धमानः परशुरामः क्रौञ्चाचलं शरेण सरन्ध्रमकरोत् । तेन तस्य महती कीर्तिरासीत् । तस्माद् भृगुपतियशोवर्त्मेत्युक्तम् । यथाह मुरारिः—

"यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥"

इति । अनुसरेः उद्दिश्य गच्छेः । रन्ध्रस्य तिरश्चीनोर्ध्वत्वात् तिर्यगायामशोभीत्युक्तम् । बलिविमथनाभ्युद्यतस्येव विष्णोः इति । बलिभङ्गोद्यतस्य । इदं व्याप्तिवाचकत्वात् तत्कालोचितं विशेषणम् ॥ ५७ ॥

**गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः**
**कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।**
**शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं**
**राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ५८ ॥**

गत्वेति । तेन रन्ध्रेणोर्ध्वं गत्वेत्यर्थः । दशमुखभुजोच्छ्वासि-

तप्रस्थसन्धेः दशमुखभुजोद्धारणाद् दलितसानुसन्धेः। त्रिदशवनिताद-र्पणस्य। ननु इदं विशेषणमयुक्तं मेघवातस्पर्शाद् दर्पणस्यान्धीभावात्। उक्तं च—

"मत्तः सदाचारशुचेः कलङ्कं पयोदवातादिव दर्पणस्य"

इति। अस्य परिहारः—कैलासस्य महत्तया मालिन्यं न संभवतीति। महत्तामेव दर्शयति — शृङ्गोच्छ्रायैरिति। विततय विस्तीर्य। यावदाकाशं वितत्येत्यर्थः। अट्टहासो महाहासः। 'अट्टहासो महाहास' इति यादवः॥ ५८॥

**उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे**
**सद्यःकृत्तद्विरदरदनच्छेदगौरस्य तस्य।**
**शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-**
**मंसन्यस्ते सति हलभृतो मेचके वाससीव॥ ५९॥**

उत्पश्यामीति। स्निग्धभिन्नाञ्जनाभे भग्नस्निग्धाञ्जनशिलासन्निभे। स्तिमितनयनप्रेक्षणीयामिति उत्पश्यामीत्यनेन संबन्धः। हलभृतो नीलाम्बरस्य। अस्यापि सद्यःकृत्तद्विरदरदनच्छेदगौरस्येत्यादि योज्यम्। मेचके नीले।

"कृष्णे नीलासितश्यामकालश्यामलमेचकाः"

इत्यमरः॥ ५९॥

**हित्वा तस्मिन् भुजगवलयं शंभुना दत्तहस्ता**
**क्रीडाशैले यदि च विहरेत् पादचारेण गौरी।**
**भङ्गी भक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः**
**सोपानं त्वं कुरु मणितटारोहणायाग्रयायी॥ ६०॥**

हित्वेति। भुजगवलयोत्सारणं देव्यास्त्रासाभावाय। यदि चेति चकारस्य त्वमित्यनेन संबन्धः। विहरेत् क्रीडेत् परिक्रामेदिति वा। भङ्गी भङ्गवान्। 'भङ्गो विभङ्गः शकलः' इति केशवः। उक्तंच 'शिलाविभङ्गैरि'ति। भक्त्या ईश्वरभक्त्या। प्रागप्युक्तं 'भक्तिनम्रः परीया'

इति। विरचितवपुः। विच्छिद्य विच्छिद्य रचनं विरचनं सोपानमित्यर्थः। मणितटारोहणाये। मणिग्रहणं मेघस्य नीलवर्णत्वात् तटसोपानयोरेकवर्णत्वं सूचयितुं कृतम्। गौरी क्रीडाशैले पादचारेण यदि विहरेत्, त्वं च भक्त्या भङ्गीभूत्वा विरचितवपुः मणितटारोहणाय सोपानं कुर्वित्यर्थः॥ ६०॥

**तत्रावश्यं वलयकुलिशोद्धट्टनोद्गीर्णतोयं**
**नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम्।**
**ताभ्यो मोक्षस्तव यदि सखे! घर्मलब्धस्य न स्यात्**
**क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः॥ ६१॥**

तत्रेति। वलयकुलिशोद्धट्टनोद्गीर्णतोयं वलयमेव कुलिशं वलयकुलिशं तेन वलयकुलिशेन ऊर्ध्वप्रोतत्वं वलयकुलिशोद्धट्टनम्। कुलिशग्रहणेनोद्धट्टनसाधनत्वमुक्तम्। यन्त्रधारागृहत्वं कृत्रिमधारागृहत्वम्। घर्मलब्धस्य घर्मकाललब्धस्य। ननु वर्षाकालो वर्तते। कथं घर्मकाललाभः। देवभूमित्वात् कैलासे षडृतवः सर्वदा वर्तन्ते। वक्ष्यति च—'हस्ते लीलाकमलम्' इति। अथवा घर्मशब्देन श्रमो विवक्षितः। क्रीडाश्रमसमये लब्धस्येत्यर्थः। भाययेर्भयं जनयेः॥ ६१॥

**हेमाम्भोजप्रसवि सलिलं मानसस्याददानः**
**कुर्वन् कामात् क्षणमुखपटप्रीतिमैरावतस्य।**
**धुन्वन् कल्पद्रुमकिसलयान्यंशुकानीव वातै-**
**र्नानाचेष्टैर्जलद! ललितैर्निर्विशेस्तं नगेन्द्रम्॥ ६२॥**

हेमेति। प्रसवो जननं पुष्पं वा, तदस्यास्तीति प्रसवि।

"प्रसवो जननानुज्ञापुत्रेषु फलपुष्पयोः"

इति यादवः। कामाद् यथेष्टम्। इदं सर्वशेषम्। क्षणमुखपटप्रीतिं, क्षणग्रहणं सलिलादानमुहूर्तविवक्षायाम्। मुखपटप्रीतिं मुखावगुण्ठनपटप्रीतिम्। ऐरावतस्य मानसावगाहिनः। उन्मज्जत ऐरावतस्य

१. 'न कुरु। म', २. 'य। सोपानं कु' क. पाठः.

मुखे लम्बमानशरीरस्त्वं तस्य मुखावगुण्ठनप्रीतिं जनयेरित्यर्थः । कल्पद्रुमकिसलयानि कल्पद्रुमकिसलयभूतानि । नानाचेष्टैः, नानाविधा चेष्टा येषाम् । ललितैर्लीलायुतैः । निर्विशेः अनुभव । इदमत्रानुसन्धेयं — कश्चित् सखा स्वप्रियसखस्य गृहं गत्वा तदीयानि वापीवाहनारामादीनि स्वैरं निर्विशतीत्यर्थो ध्वन्यते इति ॥ ६२ ॥

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्! ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमानै-
र्मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६३ ॥

तस्येति । उत्सङ्गे उपरितले अङ्के च । प्रणयिनो भर्त्तुः । प्रणयिन उत्सङ्गे कामिनीमिति वक्तव्ये कामिनीशब्दानुपादानमुत्तरार्धे वक्ष्यमाणत्वात् । स्रस्तगङ्गादुकूलां, 'दुकूलं शुक्लवस्त्रेऽपी'ति यादवः । इदमुभयत्र योज्यम् । न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यस इति, पूर्वमेवालकाज्ञानं मेघस्यास्तीति सूचयितुं नञ्द्वयं प्रयुक्तम् । कामचारिन् !, अनेन सर्वचारित्वं कामुकत्वं च विवक्षितम् । वः काल इति । वः त्वादृशानां मेघानां काले वर्षाकाल इत्यर्थः । सलिलोद्गारं, सलिलमुद्गिरतीति सलिलोद्गारः । 'कर्मण्यण्' (३. २. १) इत्यण्प्रत्ययः । उच्चैरुत्तुङ्गैर्विमानैः । सप्तभूमिकं भवनं विमानम् ।

"विमानोऽस्त्री देवयाने सप्तभूमे च सद्मनि"

इति यादवः । मुक्ताजालग्रथितं मौक्तिकगुणबद्धम् । अत्रेदमनुसन्धेयं— प्रोषिता उदात्ताः पुरुषाः वर्षाकाले समागत्य विगतमाना भूत्वा स्त्रीणां कपोललम्बानलकान् मुक्ताजालैरुद्गृह्य बध्नन्तीत्यर्थो विवक्षितः । उत्तरार्धेनाप्यलकाया ज्ञानोपाय उक्तः ॥ ६३ ॥

पूर्वसन्देशः समाप्तः ।

---

१. 'षाः क्वा' क. पाठः.

## अथ उत्तरसन्देशः ।

अतः परं च सप्तसु श्लोकेषु यथाकथाचन विधया मेघसंबन्धमुक्त्वा अलकां वर्णयति —

**विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः**
**सङ्गीतार्थप्रहतमुरवाः स्निग्धपर्जन्यघोषम् ।**
**अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः**
**प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥**

विद्युत्वन्तमिति । सचित्रा आलेख्यसहिताः । सङ्गीतार्थमहतमुरवा इति पाठः । नृत्तवाद्यगीतानां त्रयं सङ्गीतम् । अर्थशब्दो हेतुवचनः । सङ्गीतार्थाः प्रहता मुरवा येषाम् । स्निग्धपर्जन्यघोषं, पर्जन्योऽभ्रध्वनितम् ।

"पर्जन्यो गर्जदभ्रेऽभ्रध्वाने शक्रेऽस्त्रयन्त्रके"

इति यादवः । स्निग्धगर्जितघोषमित्यर्थः । अत्र मेघगर्जितवाचिनः पर्जन्यशब्दस्य प्रयोगेणैव सिद्धेऽप्यर्थे घोषशब्दप्रयोगः 'केकारवैर्बर्हिण' इत्यत्र केकारववत् सोढव्यः । अभ्रंलिहाग्राः, 'वहाभ्रे लिहः'(३. २. ३२) इति खश् । तुलयितुं तुलां कर्तुम् । तुलाशब्दः सदृशवाचकोऽप्यस्ति । त्वां सदृशीकर्तुमित्यर्थः । ननु 'तुल उन्मान' इत्ययं धातुश्चौरादिकः तुलेति कथं व्युत्पन्नः । णिचोऽनित्यत्वात् तुलेत्यपि भवति । अलं पर्याप्तम् । तैस्तैर्विशेषैः तैस्तैर्ललितवनितादिभिर्विशेषैः । पूर्वोक्तानां विशेषाणां समासवृत्तितिरोहितत्वात् स्पष्टार्थं तैस्तैर्विशेषैरित्युक्तम् । अत्र मेघसंबन्धः स्पष्टः ॥ १ ॥

**हस्ते लीलाकमलमलके बालकुन्दानुवेधो**
**नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।**
**चूडापाशे नवकुरवकं चारु कर्णे शिरीषं**
**सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥**

---

१. 'न्त्रिते इ', २. 'तैः' क. पाठः.

हस्त इति। अनेन श्लोकेन शरद्धेमन्तशिशिरवसन्तग्रीष्मप्रावृषां षण्णामृतूनां लिङ्गभूतैरसाधारणैः पुष्पैरलकायां युगपदेव प्रवृत्तिरुक्ता। तद्यथा — हस्ते लीलाकमलमित्यत्र शरल्लिङ्गेन कमलेन शरत्कालस्य सन्निधिरुक्ता। अलकं बालकुन्दानुविद्धमित्यपपाठः। अलकशब्दस्य पुँल्लिङ्गत्वात्। 'अलकाश्चूर्णकुन्तला' इत्यमरः। अलके बालकुन्दानुवेध इति पाठः। अस्मिन् पाठे रीतिभङ्गश्च न भवति। कुन्देन हेमन्तसंनिधिरुक्तः। ननु

"निषिञ्चन् माधवीवृत्तिं कुन्दशेषं च वर्धयन्"

इत्यत्र वसन्तात् प्राचीनस्य शिशिरस्य लिङ्गं कुन्दमिति प्रतीयते। कथं हेमन्तस्य लिङ्गमित्युक्तम्। उच्यते। हेमन्तशिशिरयोर्द्वयोरपि लिङ्गं कुन्दम्। हेमन्ते प्रादुर्भवति शिशिरे प्रौढीभवतीति विशेषः। अत एव बालकुन्दानुवेध इति बालशब्दः प्रयुक्तः। नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीरिति सप्तम्यन्तः पाठः। आनने कान्तिर्लोध्रप्रसवरजसा पाण्डुतां नीतेत्यर्थः। लोध्रपुष्पं हि शिशिरस्य लिङ्गम्। तथा माघकाव्ये शिशिरवर्णने —

"अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत लोध्ररजश्चयः"

(स० ६. श्लो० ६४)

इत्यादि। चूडापाशे नवकुरवकं, चूडापाशे शिखाकलापे। 'शिखा चूडा केशपाश' इत्यमरः। नवकुरवकं हि वसन्तलिङ्गम्। उक्तं च 'अग्रे स्त्रीनखपाटलं कुरवकम्' इति। चारु कर्णे शिरीषं, शिरीषं हि ग्रीष्मस्य लिङ्गम्। उक्तं च —

"स्वेदानुविद्धार्द्रनखक्षताङ्के सन्दष्टभूयिष्ठशिखं कपोले।
च्युतं न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात॥"

इति। त्वदुपगमजमित्यनेन नीपस्य वर्षालिङ्गत्वं प्रतीयते। वधूनां स्त्रीणाम्। 'वधूर्जाया स्नुषा चे'त्यमरः। त्वदुपगमजं यत्र नीपमिति मेघसंबन्ध उक्तः॥ २॥

---

१. 'रः। कु' क. पाठः.

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ३ ॥

यस्यामिति । सितमणिः स्फटिकमणिः । स्फटिकमणीनां प्रसादवत्तया रात्रिषु प्रतिविम्बातिशयः सम्भवतीत्यनुसन्धेयम् । आसेवन्ते आदृत्य सेवन्ते । त्वद्गम्भीरध्वनिषु अनेन मेघसम्बन्ध उक्तः । पुष्करेषु वाद्यभाण्डमुखेषु ।

"द्विरदकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभाण्डमुखे ।
अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टम् ॥"

इति भट्टहलायुधः । आहतेषु वाद्यमानेषु ॥ ३ ॥

*[मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥]

नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
विद्युद्दीप्रानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ४ ॥

नीवीति । बिम्बाधराणां बिम्बफलमिवाधरो यासां ता बिम्बाधरा इति स्त्रीणां नामधेयम् । अनिभृतकरेषु व्याप्रियमाणकरेषु । आक्षिपत्सु आहरत्सु । विद्युद्दीप्रानिति पाठः । त्वदीयविद्युत्तुल्यानि-

* अव्याख्यातत्वान्मेघसम्बद्धार्थाप्रतिपादकत्वाच्च श्लोकोऽयं नूनं प्रक्षिप्तः, मल्लिनाथेन तु व्याख्यातः ।

त्यर्थः। अनेन मेघसम्बन्ध उक्तः। अभिमुखमपि प्राप्य आभिमुख्येन प्राप्यापीत्यर्थः। ह्रीमूढानां लज्जाविमनस्कानाम्। चूर्णमुष्टिः मुखवासकर्पूरादिचूर्णमुष्टिः॥ ४॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां सलिलकणिकादोषमुत्पाद्य सद्यः।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यन्त्रजालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति॥ ५॥

नेत्रेति। नायकेन प्रापकेणेत्यर्थः। सततगतिना वायुना। सलिलकणिकादोषं सलिलकणिकास्पर्शदूषणम्। जलस्पर्शेन चित्राणि विनश्यन्तीत्यभिप्रायः। शङ्कास्पृष्टाः आलेख्यविनाशं दृष्ट्वा कोऽप्यस्मान् ग्रहीष्यतीति शङ्कमाना इत्यर्थः। यन्त्रजालैः मुखबन्धादिरूपजालकैः। धूमोद्गारानुकृतिनिपुणाः धूमनिर्गमानुकारेषु सम्यक् समर्थाः। 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः' (२. ३. ४३) इति समासः। जर्जराः, निर्गमद्वारानुरूपं कृतवेषवैषम्यत्वाज्जर्जराः। निष्पतन्ति निर्यान्ति। अनेन मेघसम्बन्धः स्पष्टः॥ ५॥

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानामङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः॥

यत्रेति। प्रियतमभुजोच्छ्वासितालिङ्गितानां, बलात्कारात् सञ्जातोच्छ्वासत्वादुच्छ्वासितं, प्रियतमभुजदृढालिङ्गितानामित्यर्थः। तन्तुजालावलम्बाः। हिमजलपातनिवारणार्थमुपरि बद्धे विताने प्रलम्बमानानि मुक्तादामस्थानीयानि तन्तुजालानि अवलम्बमानास्तन्तुजालावलम्बाः। यद्वा तन्तुमयं जालमानायः तन्तुजालम्। प्रासादानामुप-

१. 'अभिमुखमपि प्रा' क. पाठः. २. 'प्येत्य', ३. 'सा ख. पाठः.

रितलेषु भेकादीनामवतरणनिषेधाय जालं वितन्वन्तीति प्रसिद्धम्। अत्र चन्द्रकान्तमणिबद्धरचनतन्तुजालं विवक्षितम्। त्वत्संरोधापगमविशदैः, अनेन मेघसंबन्ध उक्तः। व्यालुम्पन्ति अपहरन्ति[1]। चन्द्रपादैः स्फुटजललवस्यन्दिन इत्यन्वयः। चन्द्रकान्ताश्चन्द्रकान्तमणयः॥ ६॥

[ अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्धम्।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति॥

*गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम्॥]

मत्वा देवं धनपतिसखं यत्र साक्षाद् वसन्तं
प्रायश्चापं न वहति भयात् त्वामपि प्रेक्ष्य कामः।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः॥ ७॥

मत्वा देवं धनपतिसखमिति। अनेन वैश्रवणसख्यात् कैलासे नित्यं शिवो वसतीत्युक्तम्। प्रायः, उत्प्रेक्षायामिदमव्ययम्।

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥"

---

१. 'न्ति। स्फुटजललवस्यन्दिनः च' क. पाठः.

---

* इमावपि श्लोकौ मन्दाकिन्या इतिश्लोकवत्।

इत्यलङ्कारे। भयात् त्वामपि प्रेक्ष्य काम इति पाठः। विरहिणां प्रोत्साहकारिणं भवन्तं प्रेक्ष्यापीत्यर्थः। मयि तं देशं प्रविष्टे मदनव्यापारः कथं भविष्यतीत्याशङ्क्याह — सभ्रूभङ्गप्रहितनयनैरिति। तस्यारम्भः तस्य प्रवृत्तिः। सिद्धः सिद्धो भविष्यतीत्यर्थः। त्वामपि प्रेक्ष्येत्यनेन मेघसंबन्ध उक्तः। मन्मथः षट्पदज्यमिति पाठे पूर्वश्लोकेष्विव मेघसंबन्धो न स्यात् ॥ ७ ॥

*[वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान्।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥]

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं त्वदमरधनुश्चारुणा तोरणेन।
यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥ ८ ॥

तत्रेति। तस्यामलकायाम्। इतः परं पञ्चसु श्लोकेषु यया-कयाचन विधया मेघसंबन्धमुक्त्वा स्वगृहस्य लक्षणमाह। वक्ष्यति च 'एभिः साधो! हृदयनिहितैर्लक्षणैर्लक्षयेथाः' इति। धनपतिगृहानुत्तरेणेति पाठः। धनपतिगृहान् वैश्रवणगृहान्। 'गृहाः पुंसि च भूम्न्येव' इत्यमरः। उत्तरेणोत्तरतः समीपे। 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (५. ३. ३५) इत्येनप्प्रत्ययः। 'एनपा द्वितीया' (२. ३. ३१) इति द्वितीया। कृतकतनयः कृत्रिमपुत्रकः। बालमन्दारवृक्षः बालकल्पवृक्षः। त्वदमरधनुश्चारुणा तोरणेनेति मेघसंबन्ध उक्तः ॥ ८ ॥

वापी चास्मिन् मरतकशिलाबद्धसोपानमार्गा
हैमैः स्फीता कमलमुकुलैर्दीर्घवैदूर्यनालैः।

---

* प्रक्षिप्तत्वधियायं श्लोको न व्याख्यातोऽन्यव्याख्यातोऽपि।

यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥

वापीति । अस्मिन् अगारे । स्फीता पुष्टा । यस्यास्तोये इति, यस्यां कृतवसतय इति वक्तव्ये तोयग्रहणं वर्षाकालेऽपि तोयस्य प्रसादातिशयसूचकम् । आध्यास्यन्तीति पाठः । आध्यानमुत्कण्ठा । 'आध्यानमुत्कण्ठोत्कलिके समे' इत्यमरः । त्वामपि प्रेक्ष्येत्यनेन मेघसंबन्ध उक्तः ॥ ९ ॥

तस्यास्तीरे विहितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे! चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ १० ॥

तस्या इति । पेशलैः चारुभिः । 'चारौ दक्षे च पेशलः' इत्यमरः । मद्गेहिन्याः प्रिय इति, इतिशब्दो हेतौ । तमेव क्रीडाशैलमेव । उपान्तस्फुरिततडितं त्वां प्रेक्ष्य कातरेण चेतसा तमेव स्मरामि इत्यन्वयः । अत्र मेघसंबन्धः स्पष्टः ॥ १० ॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहलच्छद्मनास्याः ॥

रक्तेति । केसरो वकुलः । कुरवकवृतेः कुरवक एव वृतिरावरणं यस्य । माधवीमण्डपस्य, माधवी अतिमुक्तः, माधवीवेष्टितमण्डपस्येत्यर्थः । तव सख्या इति मेघसंबन्ध उक्तः । सह मया वामपादाभिलाषीति वाक्यच्छेदः । दोहलच्छद्मना, दोहलं नाम कुसुमाद्युत्पादकं

---

१. 'त' क. पाठः.

संस्कारद्रव्यम् । तथा सप्तशत्यां —

*"दोहलिअमप्पणो किं ण मग्गसे मग्गसे कुरवअस्स ।
एअं तुह सुहग! हसइ वलिआणणपङ्कअं जाआ ॥"

अयमभिप्रायः—अहं कृतयाच्ञाञ्जलिस्तव सख्या वामपादाभिताडनं दोहलव्याजेन यथाभिलषामि, तथायं चलकिसलयो रक्ताशोकः तस्या वामपादाभिताडनं दोहलव्याजेनाभिलषतीति (न?) तथा कान्तः केसरद्रुमोऽपि दोहलच्छद्मना तस्या वदनमदिरां काङ्क्षतीति च ॥ ११ ॥

**तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-**
**मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।**
**तालैः शिञ्जावलयसुभगैर्नर्तितः कान्तया मे**
**यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद् वः ॥**

तन्मध्ये गृहमध्ये । स्फटिकफलका स्फटिकमयी निवासफलका यस्याः । स्फटिकफलकोपादानं मयूरस्य शीतप्रियत्वापेक्षया कृतम् । अनतिप्रौढवंशप्रकाशैः तरुणवेणुकादण्डसमानवर्णैः । शिञ्जावलयसुभगैरिति । शिञ्जा शिञ्जितं, शिञ्जावन्ति वलयानि शिञ्जावलयानि । शाखावृक्षवत् समासः । शिञ्जद्वलयसुभगैरिति पाठे, 'शिञ्जि अव्यक्ते शब्दे' इत्ययं धातुरात्मनेपदी । तस्मात् परस्मैपदं न भवति । नीलकण्ठः सुहृद् वः इति मेघसंबन्ध उक्तः ॥ १२ ॥

**एभिः साधो! हृदयनिहितैर्लक्षणैर्लक्षयेथा**
**द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।**
**क्षामच्छायं भवनमधुना मद्वियोगेन नूनं**
**सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥**

एभिरिति । साधो! विद्वन्! । लक्षणैः चिह्नैः । लक्षयेथाः पश्येरित्यर्थः । शङ्खपद्मौ शङ्खपद्माख्यौ निधिविशेषौ ।

---

१. 'ति वामे शि' क. पाठः.

---

*दोहदमात्मनः किं न मृगयसे मृगयसे कुरवकस्य ।
एवं तव सुभग! हसति वलिताननपङ्कजं जाया ॥

"निधिर्ना शेवधिर्भेदाः शङ्खपद्मादयो निधेः"

इत्यमरः । लक्ष्यतेः कर्मादर्शनाल्लक्षयेस्तदिति केचित् पठन्ति । तस्मिन् पाठे तदिति पूर्वोक्तमगारं परामृश्यते । इदानीमात्मीयं तद्भवनं संस्मृत्य विषण्ण आह — क्षामच्छायमिति, क्षामकान्ति । अभिख्यां शोभाम् ॥ १३ ॥

**गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः**
**क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।**
**अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं**
**खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ १४ ॥**

गत्वेति । शीघ्रसंपातहेतोः तीव्रसंपातहेतोः । प्रथमकथिते 'तस्यास्तीरे विहितशिखर' इति पूर्वोक्ते । रम्यसानौ, इदं विशेषणं सौदामनीदर्शनेऽपि रम्यप्रभेति तस्या बुद्धिजननाय कृतम् । विद्युदुन्मेषदृष्टिम् । विद्युदुन्मेषो विद्युत्स्फुरणं तदेव दृष्टिरिति विद्युदुन्मेषदृष्टिः ॥

इदानीं स्वप्रेयस्या लक्षणान्याह —

**तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी**
**मध्येक्षामा चकितहरिणीप्रेक्षिणी निम्ननाभिः ।**
**श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां**
**या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥**

तन्वीति । श्यामा श्यामवर्णा, हरितवर्णेत्यर्थः । अस्यार्थस्यानुकूलमेव वक्ष्यति — 'श्यामास्वङ्गमि'ति । यद्वा —

"श्यामा यौवनमध्यस्था प्रौढा निष्क्रान्तयौवना"

इत्युत्पलमालायाम् । अस्यार्थस्यानुकूलं द्योतकं युवतिविषय इति पदम् । शिखरिदशनेति पाठः । शिखरीणि कोटिमन्ति दशनानि यस्याः सा शिखरिदशना । तथा सामुद्रे —

"स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः ।
दन्ता भवन्ति यासामासां पादे जगत् सर्वम् ॥"

इति ।

"पक्कडाडिमबीजाभं माणिक्यं शिखरं विदुः ।"

मध्येक्षामा, 'अमूर्धमस्तकात्—' (६. ३. १२) इत्यलुक् । क्षामा क्षीणा । चकितहरिणीप्रेक्षिणीति पाठः । 'कर्तर्युपमाने' (३. २. ७९) इति णिनिः । तत्र तस्मिन् भवने । स्याद्, आख्यातप्रतिरूपमव्ययमिदं यद्यर्थे वर्तते । तथा श्रीरामायणे प्रयोगश्च—

"पठन् द्विजो वागृषभत्वमीयात् स्यात् क्षत्रियो भूमिपतित्वमीयात्"

इति । युवतिविषये युवतिपक्षे, युवतिगोचर इत्यर्थः । आद्या प्रथमा । धातुः प्रथमाया युवतिसृष्टेरादरेण निर्मितत्वात् तद्रामणीयकमस्तीति भावः । एवंरूपा तस्मिन् भवने यद्यस्ति, तां जानीया इत्युत्तरत्र सम्बन्धः ॥ १५ ॥

**तां जानीयाः परिमितकथां जीवितं मे द्वितीयं**
**दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।**
**गाढोत्कण्ठा गुरुषु दिवसेष्वेषु गच्छत्सु बाला**
**जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥**

तामिति । परिमितकथां स्वभावतः स्वल्पभाषिणीम् दूरीभूते दूरस्थे । सहचरे चक्रवाकीमिवैकामिति वाक्यच्छेदः । सहचरे चक्रवाके दूरीभूत इत्यर्थः । अस्यार्थस्य मूलं

"सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ।"

इति श्रीरामायणवचनम् । एकामसहायाम् । पूर्वोक्तानां लक्षणानामन्यथाभावमाशङ्क्याह — गाढोत्कण्ठेति । शिशिरमथिता हिमसंपर्कविशीर्णा । अन्यरूपा नष्टशोभा । अस्यार्थस्य मूलं 'हिमहतनलिनीव नष्टशोभा' इति वचनम् । अनेन श्रीरामायणवचनार्थानुसारेण कवेः पूर्वोक्तो रामकथाभिलाषः स्पष्टः ॥ १६ ॥

सर्वेषामङ्गानां प्रधानभूतस्य मुखस्यान्यरूपत्वमाह —

---

१. 'कुक्षौ च', २. 'तिविषये स', ३. 'यास्ति चेत् तां' क. पाठः.

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया
निःश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-
दिन्दोर्दैन्यं त्वदुपगमनक्लिष्टकान्तेर्बिभर्ति ॥ १७ ॥

नूनमिति । नूनं वितर्के । प्रबलरुदितोच्छूननेत्रं भूयिष्ठरोदनोच्छूसितनेत्रम् । उच्छूनं, 'टुओश्वि गतिवृद्ध्योः' इति धातोर्निष्ठानत्वे 'वचिस्वपि—' (६. १. १५) इत्यादिना संप्रसारणे कृते रूपमिदम् । असकलव्यक्ति अस्पष्टसकलप्रदेशम् । त्वदुपगमनक्लिष्टकान्तेरिति मेघसम्बन्धः । मेघसंवृतत्वमलकलम्बनस्थानीयम् ॥ १७ ॥

तां ज्ञातुं लक्षणान्तराण्याह —

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां शारिकां पञ्जरस्थां
कच्चिद् भर्तुः स्मरसि गिरिके ! त्वं हि तस्य प्रियेति॥

आलोक इति । आलोके दर्शने । 'आलोको दर्शनोद्द्योतावि'-त्यमरः । पुरा, भविष्यत्कालद्योतकमव्ययमिदम् । पुरा निपततीति निपतिष्यतीत्यर्थः । त्वां दृष्ट्वा सा भृशं मद्विरहाद् भूमौ निपतिष्यतीति यावत् । अस्मिन्नर्थे लिङ्गं — 'तामुन्निद्रामवनिशयनाम्' इति वक्ष्यमाण वचनम् । अथवा त्वद्दर्शनात् पुरा वक्ष्यमाणान् कुर्वती सा तवालोके भूमौ निपततीत्यर्थः । बलिव्याकुला, अत्र प्रियतमागमनार्थं देवताभ्यो बलिप्रदानं विवक्षितम् । तथा सप्तशत्यां —

*"णेच्छइ पासासङ्की काओ दिण्णं पि पहिअवहुआए ।
ओअन्तकरअलोज्झिअवलअअमज्झट्ठिअं पिण्डं ॥"

इति । मत्सादृश्यं मत्प्रतिकृतिं मद्विषयमालेख्यम् । 'आलेख्येऽपि च

---

* 'नेच्छति पाशाशङ्की काको दत्तमपि पथिकवध्वा ।
अवनतकरतलोज्झितवलयमध्यस्थितं पिण्डम् ॥

सादृश्यम्' इत्यजयः। उक्तं 'सादृश्यप्रतिकृतिदर्शनैः प्रियायाः' इति। विरहतनु विरहेण तनुसंस्थानम्। इदं विशेषणं सादृश्यशब्दस्यालेख्यवाचित्वे घटते। भावगम्यं, विरहात् प्राक् तादृशस्य संप्रत्येवमन्यथाभावः संभवतीत्युत्प्रेक्षागम्यमित्यर्थः। शारिकां, शारिकेति व्यक्तवाक् कापि चटकाविशेषपक्षी। 'वाचाला मुखरा शारी' इति यादवः। पञ्जरस्थां, विलालादिभयेन पञ्जरस्थामित्यर्थः। भर्तुः स्मरसीति 'अधीगर्थदयेशां कर्मणि' (२. ३. ५२) इति कर्मणि षष्ठी। स्मरसि उत्कण्ठस इत्यर्थः। गिरिके!, मार्जारादिसन्निधानात् पञ्जराभ्यन्तरं प्रविश्य बालमूषिकेव बिभेतीति बालमूषिकानामान्तरेण शारिकाया उपालम्भपूर्वं संबोधनम्। 'गिरिका बालमूषिका' इत्यमरः॥ १८॥

उत्सङ्गे वा मलिनवसने सौम्य! निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्
भूयो भूयः स्वयमधिकृतां मूर्छनां विस्मरन्ती॥

उत्सङ्ग इति। मद्गोत्राङ्कं मन्नामधेयचिह्नम्। सारयित्वा करेण परामृश्य। स्वयमधिकृताम् आत्मप्रस्तुताम्। कथञ्चित् स्वयमधिकृतामित्यन्वयः। मूर्छनां सप्तस्वरक्रमस्थापनाम्।

"क्रमयुक्ताः स्वराः सप्त मूर्छना परिकीर्तिता"

इति भरते॥ १९॥

शेषान् मासान् विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः।
मत्संयोगं हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः॥ २०॥

शेषानिति। शेषान् गतशेषान्। अवधेः शापान्तावधेरित्यर्थः। देहलीमुक्तपुष्पैः, गृहद्वारयन्त्रस्य तिरश्चीनफलकं देहली। सा च बहिर्द्वारदेहली, तत्रैव तस्याः प्रियतमालोकनोत्सुकतयावस्थानात्॥ २०॥

१. 'ति निघण्टुः॥' ख. पाठः.

सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रां विरहशयनां सद्मवातायनस्थः ॥ २१ ॥

सव्यापारामिति । सव्यापारां सविनोदाम् । रात्रौ निर्विनोदां तव सखीं यथा विप्रयोगः पीडयति, अहनि सव्यापारां न तथा पीडयेदित्यर्थः । सद्मवातायनस्थ इति पाठः । भवनवातायनस्थ इत्यर्थः । निशीथे साध्वीमत एवोन्निद्रां तां मत्सन्देशैः सुखयितुमलं पश्येत्यर्थः ॥ २१ ॥

कीदृशीं तां सुखयामीत्यपेक्षायामाह —

आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ।
नीता रात्रिः क्षण इव मया सार्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ २२ ॥

आधिक्षामामिति । प्राचीमूले तनुमिवेति, प्राचीमूलग्रहणं दिने दिने क्षीयमाणत्वं सूचयितुं कृतम् । तनुं शरीरम् । कलामात्रशेषां, मात्रशब्दोऽवधारणे । क्षण इवेति पाठः । या यज्जातीया तामेव तज्जातीयामेव ॥ २२ ॥

निश्श्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम् ।
मत्संभोगः कथमुपनमेत् स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥

निःश्वासेनेति । विक्षिपन्तीं चलयन्तीम् । शुद्धस्नानाद् गन्धामलकादिरहितस्नानात् । परुषमस्निग्धम् । आगण्डलम्बम् गण्डावधि लम्बमानमि-

त्यर्थः । उपनमेत् उपगच्छेत् । नयनसलिलोत्पीडरुद्धावकाशां बाष्पौघनिरुद्धनिद्रावसराम् ॥ २३ ॥

आद्ये बद्धा विरहदिवसे या शिरोदाम हित्वा
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् ।
स्पर्शक्लिष्टामयमितनखेनासकृत् सारयन्तीं
गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥ २४ ॥

आद्य इति । शिरोदाम हित्वेति पाठः । शिखादाम हित्वेति पाठे शिखाशब्दः शिरःशब्दपर्यायो न भवति । 'घृणिज्वाले अपि शिखे' इत्यमरसिंहवचने, 'शिखा ज्वालाकेकिमौल्योरि'ति यादवप्रकाशवचनेऽपि शिखाशब्दस्य शिरःशब्दपर्यायत्वादर्शनात् । स्पर्शक्लिष्टां स्पर्शने सक्लेशाम् । परस्परव्यतिषक्तकेशविश्लेषणार्थं हस्तस्पर्शे कृते केशमूलेषु सव्यथामित्यर्थः । अयमितनखेन अकृत्तोपान्तनखेन । सारयन्तीं परामृशन्तीम् । गण्डाभोगाद् गण्डस्थलात् । कठिनविषमां कठिनोच्चावचाम् । एकवेणीम्, एकबन्धनवती वेणी एकवेणी ॥ २४ ॥

पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमपि ततः संनिवृत्तं तथैव ।
चक्षुः खेदात् सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं नप्रबुद्धां नसुप्ताम् ॥

पादानिति । पूर्वप्रीतया पूर्वकालस्नेहेन । गतमपि इन्दोः पादान् प्राप्तमपि । ततः सन्निवृत्तं तथैवेति पाठः । तत इन्दुपादेभ्यः । सन्निवृत्तं स्वयमेव सन्निवृत्तम् खेदात् विरहव्यसनात् । पूर्वकालप्रीत्या चन्द्रकिरणान् गत्वा तेभ्यो विरहखेदाद् यथागतं निवृत्तं चक्षुरित्यर्थः । पक्ष्मभिरक्षिरोमभिः । साभ्रेऽह्नि मेघच्छन्ने दिने । नप्रबुद्धां नसुप्तां स्थलकमलिनी सूर्यकिरणस्पृष्टा विकसति मेघच्छन्नैः किरणैरस्पृष्टा निमीलति च ॥ २५ ॥

**सा संन्यस्ताभरणमबला पेलवं धारयन्ती**
**शय्योत्सङ्गे निहितमसकृद् दुःखदुःखेन गात्रम् ।**
**त्वामप्यास्रं नवजलमयं मोचयिष्यत्यवश्यं**
**प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ २६ ॥**

सेति । संन्यस्ताभरणं शरीरसादात् त्यक्ताभरणम् । पेलवं मृदु । त्वामप्यास्रं नवजलमयं मोचयिष्यत्यवश्यमिति, तथा दुःखितां दृष्ट्वा त्वमप्यवश्यं बाष्पं मोक्ष्यसीत्यर्थः । करुणावृत्तिः करुणामयाचित्तवृत्तिर्यस्य । आर्द्रान्तरात्मा, मेघस्य जलार्द्रान्तरात्मत्वं विवक्षितम् ॥ २६ ॥

सा त्वद्विरहे खिन्नां दशां प्राप्तुं किं कारणमित्याशङ्क्याह —

**जाने सख्यास्तव मयि मनः संभृतस्नेहमस्मा-**
**दित्थंभूतां प्रथमविरहे तामहं तर्कयामि ।**
**वाचालं मां न खलु सुभगंमन्यभावः करोति**
**प्रत्यक्षं ते सकलमचिराद् भ्रातरुक्तं मया यत् ॥**

जान इति । इत्थम्भूतां पूर्वोक्तदुःखावस्थाम् । भवान् सौभाग्येनैवमाहेत्याशङ्क्याह — वाचालं मामिति । सुभगंमन्यभावः । सुभगशब्दोपपदान्मन्यतेर्धातोः 'आत्ममाने खश्च' (३. २. ८३) इति खश् । 'अरुर्द्विषदजन्तस्य मुम्' (६. ३. ६७) सुभगंमन्यः । तस्य भावः, सुभगंमन्यभावः । प्रत्यक्षं ते सकलमिति, मयोक्तमिदं सर्वं तवाचिरेण प्रत्यक्षं भविष्यतीत्यर्थः ॥ २७ ॥

**रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं**
**प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।**
**त्वय्यासन्ने नयनमुपरिस्पन्दि वामं मृगाक्ष्या**
**मन्ये मीनोच्चलकुवलयश्रीतुलामेष्यतीति ॥ २८ ॥**

रुद्धापाङ्गप्रसरं रुद्धापाङ्गे प्रसरो यस्य । अपाङ्गो नेत्रान्तः । अञ्जनस्नेहशून्यम् अञ्जनेन स्नेहः स्निग्धत्वम् अञ्जनस्नेहः तेन शून्यम् । प्रत्या

देशात् निराकरणात्, निषेधादित्यर्थः। 'प्रत्यादेशो निराकृतिरि'त्यमरः। मधुनः मधुपानस्य निषेधाद् विस्मृतभ्रूविलासामित्यर्थः। ननु विलासिनीनां स्वभावत एव भ्रूविलासः सम्भवति। उक्तं च —

"तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतरेखयोर्या।
तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच॥"

इति। कथमत्र मधुपानायत्तो भ्रूविलास इत्युक्तम्। सत्यम्। अत्र स्वभावसिद्धोऽपि भ्रूविलासः स्वोद्दीपनविभावस्य मधुपानस्याभावान्नाभिव्यज्यत इति कवेरभिप्रायः। अत एव विस्मृतभ्रूविलासमिति विस्मृतपदं प्रयुक्तम्। त्वद्दर्शनेन तस्याः कुशलसूचकं वामाक्षिस्पन्दनरूपं निमित्तं भविष्यतीत्याह — त्वय्यासन्ने, भवति समीपप्राप्ते। उपरिस्पन्दि वामं मृगाक्ष्या मन्ये मीनोच्चलकुवलयश्रीतुलामेष्यतीतीति पाठः। स्त्रीणां वामाक्षिस्पन्दनमेतन्निमित्तमिति श्रीरामायणे दर्शितं —

"तस्याः शुभं वाममरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम्।
प्रास्पन्दतैकं नयनं मृगाक्ष्या मीनाहतं पद्ममिवाभिताम्रम्॥"

इति॥ २८॥

त्वद्दर्शनात् तस्या वामोरुस्पन्दनमपि भविष्यतीत्याह —

**वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-**
**र्मुक्ताजालं चिरविरचितं त्याजितो दैवगत्या।**
**संभोगान्ते मम समुचितो हस्तसंवाहनानां**
**यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम्॥ २९॥**

वाम इति। कररुहपदैः नखपदैः। मुक्ताजालं, स्त्रीणां मुक्तामयं कटीभूषणं मुक्ताजालमित्युच्यते। हारयष्टिप्रभेदाधिकारे कौटिल्यः — 'सुवर्णसूत्रान्तरं सोपानकं मणिमध्यं वा मणिसोपानकम्। तेन शिरोहस्त-

---

१. 'मिति', २. 'द उ' क पाठः.

पादकटीकलापजालकविकल्पा व्याख्याता' इति । चिरविरचितं चिरकालेन विनिर्मितम् । इदमत्रानुसन्धेयम् — ऊरुमूले निहितानां नखक्षतानां निर्वापणाय स्त्रियः खलु प्रियतमैः सार्धं स्वयं विरचितानि मुक्ताजालकानि बिभ्रति । सा पुनरिदानीं नखक्षताभावाद् नखक्षतनिर्वापणं मुक्ताजालकं दैवगत्या न बिभर्तीति खेदवचनमिति । अस्मिन्नर्थे लिङ्गं तज्जातीयदन्तक्षतनिर्वापणवचनम् । यथा कुमारसंभवे —

"दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा ।
शीतलेन निरवापयत् क्षणं मौलिचन्द्रशकलेन शूलिनः ॥"

इति । हस्तसंवाहनानां हस्ताभ्यां सुखमर्दनानाम् । 'संवाहनं मर्दनं स्याद्' इत्यमरः । सरसकदलीस्तम्भगौरम् आर्द्रकदलीस्तम्भपाण्डुरम् । ऊर्वोर्गौरत्वं च निवातवर्तित्वात् । चलत्वं स्फुरणम् ॥ २९ ॥

**तस्मिन् काले जलद! यदि सा लब्धनिद्रासुखा स्या-**
**दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।**
**मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्**
**सद्यःकण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ ३० ॥**

तस्मिन्निति । तस्मिन् निशीथे काले । 'मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे' इत्युक्तत्वात् । लब्धनिद्रासुखा स्यादिति, सा सततं विरहवेदनादनिद्रा भवति दैवाद् यदि सुप्ता स्यादित्यर्थः । अन्वास्य याममात्रं सहस्वेति । ननु विरहिणां याममात्रं स्वापो न भवति । उक्तं च—

"त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत"

इति । सत्यमिदम् । न तत्स्वापापेक्षया याममात्रपदं प्रयुक्तं[1], किन्तु संभोगापेक्षया । संभोगस्य परमावधिरेकवारो यामावसायिक इति कामतन्त्रविदो वदन्ति । तथा रतिविलासे —

---

1. 'नि' ख. पाठः.

"परमा तु रतिर्यूनामिष्टा यामावसायिकी"

इति । सद्यःकण्ठच्युतभुजलताग्रन्थीति पदच्छेदः । गाढोपगूढं गाढालिङ्गनम् ॥ ३० ॥

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरैः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ ३१ ॥

तामिति । प्रत्याश्वस्तां प्रतिबुद्धाम् । सममभिनवैर्जालकैर्मालतीनामिति, यथा जालकानि मेघजलकणिकाशीतलेनानिलेन रात्रौ समुच्छ्वसन्ति तथा प्रत्यागताश्वासां तामुत्थाप्येत्यर्थः । अनेन जातीकुसुमेभ्योऽप्यधिकं तस्याः सौकुमार्यमस्तीति सूचितम् । मालत्यः खलु वर्षासु पुष्प्यन्ति रात्रौ च विकसन्ति । अस्मिन्नर्थे लिङ्गं श्रीरामायणवचनं—

"निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥"

इति । विद्युद्गर्भः अन्तःस्तम्भितविद्युत्कः । इदं विशेषणं तस्या मेघसन्दर्शनसुखार्थमुक्तम् । स्तिमितनयनां निश्चलनयनाम् । त्वत्सनाथे त्वदधिष्ठिते त्वत्सहित इत्यर्थः । भर्तृसकाशादेवं कोऽप्यागच्छेद् इत्युत्कण्ठया सर्वदा वातायनदत्तदृष्टिमित्यभिप्रायः । धीरैर्गम्भीरैः । स्तनितवचनैः गर्जितवचनैः । मानिनीमुन्नतचित्तां मनस्विनीमित्यर्थः । 'मानश्चित्तसमुन्नतिरि'त्यमरः । अनेन विशेषणेन तस्याः पुरस्ताद् धीरमेव वक्तव्यं कातरवचने तु सा मिथ्येति जानातीत्युक्तम् ॥ ३१ ॥

भर्तुर्मित्रं प्रियमविधवे! विद्धि मामम्बुवाहं
तत्सन्देशान्मनसि निहितादागतं त्वत्समीपम् ।

---

१. 'नि' ख. पाठः. २. 'त्यः व', ३. 'व न को' क. पाठः

**यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां**
**मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३२ ॥**

भर्तुरिति । अविधवे!, अनेन तव भर्ता जीवतॉत्युक्तम् । अविधवापदं कविसमये भ्रष्टमिति न मन्तव्यं, तथा श्रीरामायणे प्रयोगात् —

"ये मामाहुः पितुर्गेहे पुत्रिण्यविधवेति च"

इति । तत्सन्देशात् तत्सन्देशवचनकरणात् । अस्यार्थस्य द्योतकं मनसि निहितादिति वाक्यम् । न केवलं मित्रमात्रमहं, किन्तु त्वत्समागमाय तस्य प्रेरकश्च भवामीत्यभिप्रायेणाह—यो वृन्दानि त्वरयतीति । पथि श्राम्यतां पथिकानामित्यर्थः । प्रोषितानां स्वभार्यादिकं विहाय कार्यवशाद् देशान्तरगामिनामित्यर्थः । मन्द्रस्निग्धैः गम्भीरसुखश्रवैः । इदं विशेषणम् उग्रगर्जितश्रवणे प्रोषितानां विनाशो मा भूदित्यभिप्रायेण प्रयुक्तम् ॥ ३२ ॥

**इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा**
**त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैव ।**
**श्रोष्यत्यस्मात् परमवहिता सौम्य! सीमन्तिनीनां**
**कान्तोदन्तः सुहृदुपनतः सङ्गमात् किञ्चिदूनः ॥ ३३ ॥**

इतीति । पवनतनयं हनूमन्तम् । सम्भाव्य चैव सम्भावनां च कृत्वैवेत्यर्थः । अन्योऽयमिति न तूष्णीमास्ते, भर्तुर्मित्रमिति बुद्ध्वा सा निश्शङ्कमेव त्वां प्रेक्षिष्यते सम्भावयति चेत्यर्थं द्योतयितुमेवकारः प्रयुक्तः । अस्मात् परं भर्तुर्मित्रमित्येतस्माद् वचनात् परम् । अतः परमवधाने किं कारणमित्यपेक्षायामाह—सङ्गमात् ॥ ३३ ॥

**तामायुष्मन्! मम च वचनादात्मनश्चोपकर्तुं**
**ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।**

---

१. 'त्वेत्य' इ पाठः

अव्यापन्नः कुशलमबले! पृच्छति त्वां वियुक्तः
पूर्वाशास्यं सुलभविपदां प्राणिनामेतदेव ॥ ३४ ॥

तामिति। आयुष्मन्नित्यनेन त्वयि जीवति साहं च जीवा(व) इत्युक्तम्। आत्मनश्चोपकर्तुरिति पाठः। उपकर्तुरुपकारिणः। मम वचनाच्चायुष्मन्! उपकारिणस्तव वचनाच्च तामेवं ब्रूया इत्यर्थः। मेघवचनप्रकारमाह—तव सहचरो रामगिर्याश्रमस्थ इति। आश्रमपदं तत्रापि तपस्विप्राय एव वर्तते इति द्योतयितुं प्रयुक्तम्। अत्रेदमनुसन्धेयं—तव सहचर इत्यादि मन्मुखेनेदमाह इत्यन्तं वाक्यजातं मेघस्य वचनम्। अतः परं श्यामास्वङ्गमित्यादिवचनं यक्षस्य चेति। पूर्वाशास्यं सुलभविपदां प्राणिनामेतदेवेति, स्वयमव्यापन्नः सन् प्रियजनं प्रति कुशलप्रश्नं करोतीति यद् एतदेव सुलभविपदां प्राणिनां प्रथमप्रार्थनीयमित्यर्थः ॥ ३४ ॥

अङ्गेनाङ्गं तनु च तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकखरोच्छ्वासिना दूरवर्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ ३५ ॥

अङ्गेनेति। अङ्गेन शरीरेण। कीदृशेन शरीरेण कीदृशमित्यपेक्षायामाह—तनु च तनुनेति। चकारः प्रतिविशेषणमाख्यातसम्बन्धं कर्तुं प्रयुक्तः। अङ्गस्य तनुत्वे निदानमाह—गाढतप्तेन तप्तमिति। तापस्य किमभिव्यञ्जकमित्यपेक्षायामाह—सास्रेणेति। आस्रद्रुतमिति पाठः। द्रुतास्रमित्यर्थः। आहिताग्न्यादिषु पाठात् साधुत्वम्। आस्रस्य किं निमित्तमित्यपेक्षायामाह—अविरतोत्कण्ठमुत्कण्ठितेन। आत्मधर्मा अप्युत्कण्ठादयः शरीरेऽपि प्रयुज्यन्ते। उक्तं च—त्वय्यायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैरिति। उत्कण्ठायाः किमभिव्यञ्जक-

२. 'वित इ' क. पाठः.

मित्यपेक्षायामाह — उष्णोच्छ्वासामिति । समधिकखरोच्छ्वासिनेति पाठः । खरमुष्णम् ।

"तिग्मं तीव्रं खरं तीक्ष्णं चण्डमुष्णं पटु स्मृतम्"

इति भट्टहलायुधः । उच्छ्वासशब्देन निःश्वासो विवक्षितः । सङ्कल्पैस्तैरिति । सङ्कल्पैर्मानसकर्मीभूतैस्तनुत्वतापादिविशिष्टैः शरीरावस्थान्तरैः । किमर्थमेवं करोतीत्याशङ्कयाह — विधिना वैरिणा रुद्धमार्ग इति ॥ ३५ ॥

**शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्**
**कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।**
**सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-**
**स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ३६ ॥**

शब्देति । शब्दाख्येयं शब्दा एवाख्येयमभिधेयं यस्य तच्छब्दाख्येयं निरर्थकमित्यर्थः । सखीनां पुरस्तादिति वचनं जनाकीर्णत्वाभिर्व्याजाननस्पर्शदौर्लभ्यादुक्तम् । श्रवणविषयं श्रवणदेशम्, अन्योन्यवार्ताश्रवणदेशमित्यर्थः । उत्कण्ठाविरचितपदम् उत्कण्ठामधिकृत्य विरचितशब्दमित्यर्थः । इदं वक्ष्यमाणं वाक्यजातम् ॥ ३६ ॥

अतः परं चतुर्भिः श्लोकैर्विरहिणां कामतन्त्रोक्तानि विरहिणीसदृशावलोकनचित्रकर्मस्वप्नसमागमतदङ्गस्पृष्टस्पर्शनानि चत्वारि विनोदनान्युक्तानीत्यनुसन्धेयम् । यथा गुणपताकायां—

"वियोगे चायोगे प्रियजनसदृक्षानुगमनं
ततश्चित्रालोकं स्वपनसमये दर्शनमपि ।
तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमिति
प्रतीकारः कामव्यथितमनसां कोऽपि गदितः ॥"

इति । तेषु प्रियासदृशावलोकनमाह—

---

१. 'भवनं' ख. पाठः.

**श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं**
**वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।**
**उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूपताकां**
**हन्तैकस्थं क्वचिदपि न ते चण्डि ! सादृश्यमस्ति ॥**

श्यामास्विति । श्यामासु प्रियङ्गुलतासु । उत्पश्यामि उत्प्रेक्षे । प्रतनुषु अतिशयेन तन्वीषु । भ्रूपताकां, पताका ध्वजं भ्रूरेव पताका भ्रूपताका । भ्रुवः पताकात्वेन रूपणं भावादिसूचकत्वात् । हन्त विषादे । एकस्थं एकत्र स्थितम् । चण्डि ! अत्यन्तकोपने! । अनेनैकत्र सादृश्यं लब्धं चेद् भवति तदेवालं भवति किं मया कार्यमिति मह्यं मा कुप्य इति परिहासाभिप्रायेण प्रयुक्तम् । सदृशमेव सादृश्यं, पूर्वोदाहृतानां सदृशवाचित्वात् ॥ ३७ ॥

चित्रदर्शनमाह —

**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-**
**मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।**
**अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥३८॥**

त्वामिति । धातुरागैः धात्वाख्याञ्जनद्रव्यैः । आत्मानं माम् । तस्मिन्नप्यालेख्येऽपि । नौ आवयोः । कृतान्तः दैवम् ॥ ३८ ॥

स्वप्नसमागममाह —

**मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-**
**र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।**
**पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां**
**मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ३९ ॥**

मामिति । सम्भावनार्थं नञ्द्वयं प्रयुक्तम् । स्थलीदेवतानां, तरुकिसलयेष्विति वक्ष्यमाणत्वाद् वनशब्दाप्रयोगः । तरुकिसलयेषु,

इदं पतितानामश्रुलेशानां प्रकाशनाय प्रयुक्तम् । स्वप्नसन्दर्शने कथमपि लप्स्यमानायास्तव निर्दयाश्लेषहेतोः स्वापात् प्रागेवाकाशप्रणिहितभुजं मां दृष्ट्वा करुणरसाविद्धहृदया वनस्थलीदेवता बाष्पं मुञ्चन्तीत्यर्थः । अन्ये तु पश्यन्तीनां तुहिनकणिकाच्छद्मना देवतानामिति पाठमादृत्य व्याचक्षते । इदं रसावहं न भवति। कामार्तस्य तत्त्वं विहाय व्याजबाष्प[1]मोचनवर्णनस्यायुक्तत्वात् ॥ ३९ ॥

तदङ्गस्पृष्टस्पर्शनमाह—

**भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां**
**ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।**
**आलिङ्ग्यन्ते गुणवति! मया ते तुषाराद्रिवाताः**
**पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ४० ॥**

भित्त्वेति । देवदारुद्रुमाणाम् । दारुशब्दे सति किमर्थं द्रुमशब्दः प्रयुक्त इति नाशङ्कनीयं, संज्ञापातित्वाद्‌ दारुशब्दस्य । उक्तं च—'स देवदारुद्रुमवेदिकायाम्' इति । दक्षिणेन, मार्गेणेति शेषः । 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा० २. ३. १८) इति तृतीया । अस्य विशेष्याप्रयोगः समेन धावति विषमेण धावतीतिवत् । प्रयुक्तं च 'भूय एवोत्तरेण' इति । गुणवति!, गुणः शरीरस्य हृद्यः स्पर्शगुणो विवक्षितः । गुणवति!, आलिङ्गनादिषु सुखस्पर्शवतीत्यर्थः । एतदेव विवृणोति—पूर्वस्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति । किलशब्दः सम्भावनायाम् । एभिः तुषाराद्रिवातैः । इतिशब्दो हेतौ । अस्यार्थस्य मूलं—

"वाहि वात! यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश"

इति श्रीरामायणवचनम् ॥ ४० ॥

**संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा**
**सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।**

---

1. 'ष्पस्य यु' क. पाठः.

इत्थं चेतश्चटुलनयने! दुर्लभप्रार्थनं मे
गाढोष्णाभिः कृतमशरणं त्वद्वियोगव्यथाभिः॥ ४१॥

सङ्क्षिप्येतेति। प्रार्थनायां लिङ्। सर्वावस्थासु ग्रीष्ममध्यन्दिनावस्थासु। मन्दमन्दातपं 'प्रकारे गुणवचनस्य' (८. १. १२) इति द्विर्वचनम्। अहरपि मन्दातपमेव स्यादित्यर्थः। दुर्लभप्रार्थनं दुर्लभत्रियामासंक्षेपादिप्रार्थनम्। गाढोष्णाभिः, अनेन दिवसस्य मन्दातपस्य विघातो विवक्षितः। अशरणम् अरक्षकं त्वद्वियोगव्यथाभिः। अनेन त्रियामासंक्षेपप्रतिबन्धो विवक्षितः॥ ४१॥

इदानीं स्वशोकावस्थाकर्णनेन सा दुःखिता भविष्यतीत्याशङ्क्य तामाश्वासयति —

न त्वात्मानं बहु विगणयन्नात्मना नावलम्बे
तत् कल्याणि! त्वमपि नितरां मा गमः कातरत्वम्।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥ ४२॥

नेति। तुशब्दोऽवधारणे। बहु विगणयन् बहु भद्रकं भविष्यतीति विजानन्नित्यर्थः। आत्मना स्वयमेव। अवलम्बे धारयामि। बहु विगणयन्नात्मानं स्वदेहं स्वयमेव धारयामीत्यर्थः। अस्य मूलं —

"दुष्करं कुरुते रामो हीनो यदनया प्रभुः।
धारयत्यात्मनो देहं न शोकेनावसीदति॥"

इति श्रीरामायणवचनम्। तत् तस्मात्। कल्याणि! कल्याणार्थिनि!। त्वमपि कल्याणाशंसिनी भूत्वा कातरत्वं मा गच्छेरित्यर्थः। मद्विशिष्टस्यापि सर्वस्य जनस्य सुखदुःखे पर्यायेण भवत इत्याह — कस्येति। अत्यन्तम् अतिक्रान्तावसानं, नित्यमिति यावत्। एकान्तत एकान्तम्। प्रथमार्थे तसिल्॥ ४२॥

कदा कल्याणमावयोर्भविष्यतीत्यपेक्षायामाह —

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ४३ ॥

शापान्त इति। भुजगशयनादुत्थिते शार्ङ्गपाणाविति, अनेन यस्मिन् शरत्काले परमपुरुषः प्रबुध्यते तस्मिन् काले मम शापान्त इत्युक्तम्। तथा कौर्मे पुराणे—

"क्षीराब्धौ शेषपर्यङ्क आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोः संपूजयेद्धरिम् ॥"

इति। मासानन्यान् गमय चतुर इति, आषाढमासादिकानाश्वयुजमासान्तानित्यर्थः। ननु आषाढस्य प्रथमदिवस इत्युक्तम्। आषाढश्रावणौ प्रावृट्। ततः परं शरदिति प्रसिद्धम्। तस्मात् कथमाषाढात् प्रभृति मासचतुष्टयात् परः शरत्काल इत्युक्तम्। उच्यते। ऋतूनां कल्पना द्विधा। केचित् षड्ऋतव इति वदन्ति। अपरे त्रय इति। अत्र तावद् ऋतुत्रयपक्षाश्रयेणोक्तम्। तथा श्रीरामायणे—

"चत्वारो वार्षिकाः प्रोक्ता गता वर्षशतोपमाः"

इति। लोचने मीलयित्वेति वचनं लोकोक्तिच्छाययोक्तम्। विरहगणितमिति पाठः। विरहकाले पश्चादेवमनुभविष्याव इति गणितं सङ्कलिपतम्। आत्माभिलाषं गणितं मया हृदये निहितमित्यर्थः। निर्वेक्ष्यावोऽनुभविष्यावः ॥ ४३ ॥

सर्वमिदं वञ्चकवचनमिव प्रतिभाति। मया ज्ञातपूर्वं किमपि लक्षणं वदेत्याशङ्क्याह—

भूयश्चाह त्वमसि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा।

सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव! रमयन् कामपि त्वं मयेति ॥

भूय इति। भूयश्चाह इति पाठः। भूयश्चाह पुनरपि मन्मुखेनाहेत्यर्थः। मन्मुखेनेदमाह इत्युक्तत्वात्। त्वमसीति पाठः। सस्वरं सशब्दम्। कितव! धूर्त!। अयमर्थः—निद्रासमये रुदित्वा सशब्दं प्रबुद्धासि। किमिति बहुशः पृच्छतो मे कितव! स्वप्ने त्वं कामपि रमयन् मया दृष्ट इति सान्तर्हासं पुरा त्वया कथितमिति ते प्रियतमो भूयश्च मन्मुखेनेदमभिज्ञानमाहेति ॥ ४४ ॥

एतस्मान्मां कुशलिनमभिज्ञानदानाद् विदित्वा
मा कौलीनादसितनयने! मय्यविश्वासिनी भूः।
स्नेहानाहुः किमपि विरहे ह्रासिनस्ते ह्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ४५ ॥

एतस्मादिति। अभिज्ञानदानाद् अभिज्ञानस्य वाचा प्रदानात्। कौलीनाल्लोकवादाद्, एतावता कालेन तव भर्ता परासुः स्यान्नो चेदागमिष्यतीति जनवादादित्यर्थः। असितनयने!, इदमप्यभिज्ञानम्। कौलीनान्मय्यविश्वासिनी मा भूः इत्यर्थः। एतावन्तं कालं विरहितयोरावयोः स्नेहा विगलन्तीत्याह—स्नेहानाहुः किमपि विरहे ह्रासिन इति। स्नेहान् विरहे ह्रासिन इत्याहुः। तत् किमपि किञ्चिदतितुच्छमित्यर्थः। प्रत्युत स्नेहा विरहे वर्धन्ते इति स्वमतेनाह—ते ह्यभोगादिति। अभोगाद् भोगालाभात्। वस्तुनि प्रयोजनादिविषये। उपचितरसा उपचितशृङ्गारादिरसाः। ते स्नेहाः इष्टे वस्तुनि भोगालाभादेव उपचितरसाः प्रेमराशीभवन्तीत्यर्थः। ननु 'प्रेमा ना प्रियता हार्दम्' इत्यमरसिंहवचनात् प्रेमस्नेहयोरैक्यं प्रतीयते। कथं तयोर्भेदवचनमिति। उच्यते। स्नेहादन्यत् प्रेम। यथाहुरलङ्कारविदः—

"अवलोकनाभिलाषौ रागस्नेहौ ततः प्रेम ।
रतिशृङ्गारौ योगे वियोगगतो विप्रलम्भश्च ॥"

इति ॥ ४५ ॥

[आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥]

इदानीं मेघं स्तौति —

कच्चित् सौम्य! व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निश्शब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ४६ ॥

कच्चिदिति । इदं बन्धुकृत्यं त्वया व्यवसितं कच्चिदित्यन्वयः । अहं करिष्यामीति प्रत्युत्तरं न ब्रूषे । तथाप्यन्येषामिव प्रत्युत्तरप्रदानात् तव धैर्यं न कल्पयामीत्याह — प्रत्यादेशादिति । आदेशो वचनं, प्रत्यादेशः प्रतिवचनम् इत्युत्तरं विनापि भवतो धीरतां कल्पयामीत्यभिप्रायः । यद्यपि प्रत्यादेशशब्दः प्रत्याख्यानवचनः, तथाप्यत्र प्रतिवचनवाचको भवति प्रत्युक्तमिति वक्ष्यमाणत्वात् । उक्तमर्थमुपपादयति — निश्शब्दोऽपीति । अनेन निरुत्तरत्वं विवक्षितम् । प्रत्युक्तं प्रतिवचनम् । प्रणयिषु प्रार्थयमानेषु । सतामुत्तमानाम् । ईप्सितार्थक्रिया ईप्सितार्थसम्पादनम् । प्रणयिषु ईप्सितार्थादनतिवृत्तिरेव प्रतिवचनं भवतीत्यर्थः ॥ ४६ ॥

एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्मनो मे
सौहार्दाद् वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।

**इष्टान् देशान् विचर जलद! प्रावृषा संभृतश्री-**
**र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ ४७ ॥**

एतादिति। अनुचितप्रार्थनावर्त्मनः भवतः प्राधान्यमनादृत्य मत्प्रियायै सन्देशं हरेत्येवमनुचितप्रार्थनाप्रकारस्य। सौहार्दाद् वा एतावन्तं कालमाभाषणादिजनितात् सुहृद्भावादित्यर्थः। उक्तं च — 'सम्बन्धमाभाषणपूर्वमाहुः' इति। विधुर इति वा। विधुरः प्रियाविश्लिष्टः। मयि विधुर इत्यनुग्रहबुद्ध्या वेत्यर्थः। विचर, विपूर्वश्चरतिः सकर्मको भवति। 'अधिज्यधन्वा विचचार दावम्' इत्युक्तत्वात्। प्रावृषा संभृतश्रीः वर्षाकालेन संभृतशोभः। अयमत्र समाधिः — कश्चित् पथिको देशान्तराणि गच्छन् कयापि दास्या संभृतार्थो भवतीति। एवं मम वियोगप्रकारेण। तव विद्युता विप्रयोगो मा भूदिति देशान्तरगमनात् पथिकायमानस्य भवतः क्षणमपि मम कान्तयेव विद्युता विप्रयोगो मा भूदित्यभिप्रायः॥ ४७॥

इति श्रीदाक्षिणावर्तनाथविरचितो
मेघसन्देशप्रदीपः समाप्तः।

---

**शुभं भूयात् ॥**

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Varya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II. 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshîraswamin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part II, 2nd Kanda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânânda Sarasvati. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II.) | 2 | 0 | C |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part III. 2nd Kanda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part IV. 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kavya). | 1 | 4 | C |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III.) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Raghavânanda. | 0 | 8 | 0 |

| | | | |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Sri Krishnananda Sarasvati (Part IV.) | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha) | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kavya) by Bharavi with the commentary Sabdarthadipika of Chitrabhanu (1, 2 and 3 Sargas) | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kavya) by Kalidasa with the commentary Pradipa of Dakshinavartanatha. | 1 | 0 | 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum.*